शिष्याः शिथिलबुद्धयः श्रुतिपथे येषां वयं ये च न-
स्तत्सम्मोचसमर्पणक्षममिदं चाडम्बरैः किं परैः ॥
आस्तिक्यवाञ्छिथिलबुद्धिरनभ्यसूयः
सत्सम्प्रदायपरिशुद्धमनाः सदर्थी ।
सङ्केतभीतिरचितैः स हि वेष्वसक्तः
सम्यक्पथीमनुविधास्यति शाश्वतीं नः ॥

Colophon. इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ता-
चार्य्यस्य कृतिषु अधिकारसंग्रहः समाप्तः ॥

( टीकायाः शेषवाक्यम् )

आस्तिक्यवान् शास्त्रविश्वासशाली निश्चितबुद्धिः श्रुतार्थधारणशक्तः अनभ्य
सूयः गुणे दोषाविष्करणरहितः सता श्रुतिस्मृत्यविरोधिना संप्रदायेन
परिशुद्धमनाः निःसंशयहृदयः सदर्थी सद्भ्यः अर्थविशेषं जिज्ञासुः
सङ्केतभीत्या रचितः कृतेषु निःसारग्रन्थेषु असक्तः पुरुषः यः सः शाश्वतीं
अविच्छिन्नसम्प्रदायां सम्यक्पथीं सन्मार्गं अनुविधास्यति × × × × ॥
इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद् वेङ्कटनाथस्य वेदा-
न्ताचार्य्यस्य कृतिषु अधिकारसंग्रहः समाप्तः । शुभमस्तु संवत् १८७९ ।

विषयः। मङ्गलाचरणग्रन्थप्रयोजने उक्त्वा उपोद्घाताधिकार-सारनिष्कर्षाधिकार-प्रधानप्रति-
तन्त्राधिकार-अर्थपञ्चकाधिकार-परदेवतापारमार्थ्याधिकार-तत्त्वत्रयचिन्ताधिकार-मुमुक्षुत्वाधि-
कार-अधिकारविभागाधिकार-उपायविभागाधिकार प्रपत्तियोग्याधिकार-परिवारविभागाधिकार-
पुरुषार्थाधिकार-शास्त्रीयनियमाधिकार-शिष्यकृत्याधिकार-सिद्धोपायशोधनाद्यधिकाराणां संग्रहः।

---

**No. 5.** अनुक्रमणिका. Substance, country-made paper, 7 × 2½ inches. Folia, 44. Lines, 7 on a page. Extent, 608 çlokas. Character, Nāgara. Date, Sk. 1734. Place of deposit, Benares City, Govinda Bhaṭṭa. Appearance, tolerable. Prose. Correct.

Beginning. श्रीगणेशाय नमः । ॐ । गं । अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीक-
ऋक्संख्या-ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशम् ॥ इत्यादि ।

End. ऋग्वेदे पारायणपाठे शाकल्ये शैशिरीयके नमः शौनकाय नमः शौनकाय ॥

Colophon. इति कात्यायनप्रोक्तानुक्रमणिका समाप्ता ॥ * ॥ शुभमस्तु शाके १७३४
अङ्गिरोनामसम्वत्सरे वसन्तऋतौ अधिकवैशाखमासे कृष्णपक्षे पञ्चम्यां
तिथौ भृगुवासरे पूर्व्वाषाढनक्षत्रे मिथुनस्थे देवगुरौ इदं पुस्तकं समाप्तम् ॥ •

**विषयः ।** ऋग्वेदीयशाकलशाखाया ऋषिदैवतच्छन्दसां निर्णयः ।

---

**No. 6.** **अन्वयशिक्षा** . By **रामकृष्णशर्म्मा** . Substance, palm-leaf, 12 × 1½ inches. Folia, 10. Lines, 3 on a page. Extent, 400 çlokas. Character, Bengali. Date, ? Place of deposit, Mānpāsā, District Bākharganja, Paṇḍita Jagaccandra Tarkālaṇkāra. Appearance, old. Incorrect.

**Beginning.** नमः शिवाय ।
नत्वा कृष्णपदद्वन्द्वं श्रुत्वा सतां वचस्तता ।
क्रियतेऽन्वयशिक्षायाः श्रीरामकृष्णशर्म्मणा ॥
ह्रस्वो दीर्घश्च सन्धाया विन्दुसर्गौ च कादिना । (?)
एवं ... मेवका ज्ञेया पञ्चाशद्वर्णमालिका ॥ इत्यादि ।

**End.** साधूक्तिर्द्दिविधा पद्यमयी गद्यमयीति च ।
छन्दसा प्रथितं पद्यं गद्यन्तु पदराजिना ॥

**Colophon.** इत्यन्वयशिक्षा समाप्ता ॥

**विषयः ।** अत्र प्रथमं स्वरनिरूपणम् । ततो वाक्यान्वयरीत्यादिः गद्यपद्यनिरूपणञ्चेति ।

---

**No. 7.** **अमरकोषटीका** . By **रत्नेश्वरः** . Substance, country-made paper, 18 × 3 inches. Folia, 84. Lines, 8 on a page. Extent, 2,000, çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Āḍāihāzār, Paṇḍita Candrakānta Vidyālaṇkāra. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो महागणपतये ॥ ॐ नमो विष्णवे ॥
भवानीचरणाम्भोजं नत्वा गुरुपदं ततः ।
टीकाममरकोषस्य वक्ति रत्नेश्वरः सुधीः ॥
पण्डितैर्ज्ञायते सर्व्वं तदर्थं न च मे श्रमः ।
नानातन्त्रं समालोक्य बालकार्थो ममोद्यमः ॥
अथ ग्रन्थारम्भे शिष्टाचारपरिप्राप्ततयाशेषविघ्नविनाशायाभिमतदेवता-नमस्कारकीर्त्तनेन परोपदेशेन च पुण्यमर्ज्जयन् ग्रन्थकृदाह यस्येति । अगं पर्व्वतं बाधत इत्यगाधो विष्णुः हे धीराः स विष्णुः सेव्यतां । अन्यैस्तु धीरा इत्यत्र च प्रश्लिष्य व्याख्यायते । यस्य अगाधस्य विष्णोर्लोकपालनादयो गुणा अनघा निष्पापा निर्म्मला इति यावत् । ज्ञानं ददातीति ज्ञानदा सरस्वती

तथा विशिष्टस्य यद्वा ज्ञानदा सरस्वती ईर्लक्ष्मीः ज्ञानदे तथा विशिष्टस्य वा विष्णुरपि तथा विष्णोः सागरशायित्वात् ततृपक्षाखाभावश्चितिः ॥ इत्यादि ।

End. वीजस्य कोषः पत्रं वीजकोषः कोषोऽस्त्री ...... पात्रे इति मेदिनी । श्रियते इम् वरणे बाहुलकादटेन वरं इत्सानां दीप्तिं अटति इत्यपि सन्ध्यायां वराटः । (?) इयं पद्मवीजाधारे । पद्मवीज इति केचित् ॥ इह काण्डे यदुक्तं तत् श्लोकेन संहरति उक्तमिति । तत्र स्वर्गवर्गः सप्तधा उक्तः पातालस्यतुर्था शब्दादीत्यादिशब्देन रूपरसादीनां ग्रहणं एषाञ्च सङ्गत- मिति तत्र स्वःसङ्गतं देवादि असुरादि च व्योमसङ्गतं मेघादि नक्षत्रादि च दिक्सङ्गतं दिग्गजादि कालसङ्गतं दिनपक्षादि धा (?) सङ्गतं विचारणादि शब्देन रूपरसादिगन्धादिक ...... यशोनिन्दादि च नाट्याधुकुंशादि- पातालसङ्गतं ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...

Colophon. इति श्रीवन्द्यघटीय श्रीरमानाथशर्म्मात्मज-श्रीरत्नेश्वरशर्म्मविरचितामरकोष- टीका समाप्ता ॥

अत्र यल्लिखितं भ्रान्त्या चाज्ञानाल्लिखितञ्च यत् ।
शुद्धं पण्डितैः शोध्यं प्रार्थना प्राञ्जलिर्मम ॥
मत्कृतिं समालोक्य स्वपौरुषसमीक्षया ।
त्समाच्छादनं कुर्व्वन् सुकृतं तस्य नश्यतु ॥
त्वा नारायणं देवं भवानीचरणान्ततः ।
दपादं नमस्कृत्य चक्रे टीकेयमुत्तमा ॥
लेन लिखिता पुस्ती छलेन नीयते यदि ।
तता वै गर्द्दभस्तस्य माता च शूकरी भवेत् ॥
श्वरिः शरणं सदा ॥

विषयः । अमरसिंहकृतस्य कोषस्य व्याख्यानम् ।

---

**No. 8.** अवयवटीका. By गदाधरभट्टाचार्य्यः. Substance, country-made paper, $18 \times 4\frac{1}{2}$ inches. Folia, 46. Lines, 9 on a page. Extent, 2,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinipure, Post Office Khadār grāma Kurān, Paṇḍita Ambikācaraṇa Vidyāsāgara. Appearance, new. Prose. Correct.

**Beginning.** श्रीहरिः। काशिकेऽनुकूला भव। अनुमानं निरूप्य न्यायतदवयवनिरूपणं प्रतिजानीते। मूले तत्रेति निरुक्तमनुमानं परार्थं विचारदशायां मध्यस्थस्य विवादविषयसाध्यनिश्चयरूपप्रयोजनसाधनं न्यायसाध्यं न्यायप्रयोज्यमित्यर्थः वादिप्रयुक्तन्यायजन्यशाब्दबोधेन मध्यस्थस्य लिङ्गपरामर्शरूपानुमानजननादिति भावः। ज्ञायमानलिङ्गस्यानुमानत्वे विशेषणस्य परामर्शस्य न्यायाधीनत्वेन तद्विशिष्टस्य तथात्वमित्यवधेयम्। अथवा अनुमानमनुमितिः परार्थं मध्यस्थस्य साध्यसंशयनिवृत्तिरूपप्रयोजनसाधनं परः प्रतिवादी यर्थो निवृत्तिर्यस्मात् तादृशमिति वा। एतेन निरूपणप्रयोजनमुपदर्शितम्। इत्यादि॥

**End.** एतन्मतं दूषयति बौधयापीति। अयम्भावः सद्वानसत्वादिनोपस्थितेष्वधिकरणेषु साध्यवत्त्वप्रतीतावपि धूमवत्त्वावच्छेदेन वह्निमत्त्वायद्वात् तत्तद्रूपसामानाधिकरण्यान्येष्वधिकरणेषु साध्याभावावगाहित्वात् व्यभिचारबुद्धौ बाधकाभावस्तस्माच्छाब्दतो व्याप्तिप्रत्ययार्थमेव व्याप्तिं प्रतीच्छारूपा बौधा। द्विवक्तयत्पदसमभिव्याहारस्थले तत्पदार्थांशे विधेयबोधकपदस्य यत्पदार्थविधेयव्यापकताविशिष्टस्वार्थलक्षणाया निरूढ़त्वात् व्याप्तिबोधानुपगमे धूमव ... ... अधिकरणानामेव यत्र बुद्धिस्थता तत्र तत्र यो यो धूमवान् स वह्निमानिति प्रयोगस्यापि प्रामाण्यापत्तेः तादृशयत्तत्पदार्थेषु सर्व्वेषु वह्निमत्सु धूमवत्त्वबोधात् वह्निधूमशून्याधिकरणस्याबुद्धिस्थत्वेन तदर्थविरहादिति॥०॥

**Colophon.** श्रीकाशी जयतितरां। समाप्तश्चायं ग्रन्थः॥

**विषयः।** तत्त्वचिन्तामणीयानुमानखण्डान्तर्गतस्य अवयवग्रन्थस्य शिरोमणिकृतदिधीत्याख्य टीकायाः व्याख्यानम्।

---

**No. 9.** अष्टोत्तरसहस्रमहावाक्यरत्नावली. By रामचन्द्रेन्द्रः. Substance, country-made paper, 12×5 inches. Folia, 42. Lines, 8 on a page. Extent, 600 çlokas. Character, Nāgara. Date, ? Place of deposit, Hātuyā Mahārāja's Library. Appearance, fresh. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः। श्रीमद्विद्याधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः।

ईशाद्युपनिषत् प्रोक्तमहावाक्यकलेवरम्।
विकलेवरकैवल्यं रामचन्द्रपदं भजे॥
विद्याधिष्ठानसन्मात्रवासुदेवेन्द्रमूर्त्तये।

श्रीदेशिकस्वरूपाय परस्मै ब्रह्मणे नमः ॥
नत्वा श्रीदेशिकं ब्रह्म × × मिच्छताम् ।
महावाक्यरत्नराजिकिरणावलिरीर्य्यते ॥ इत्यादि ।

End. फलभूतमहावाक्यफलो वै देहसत्तकः ।
एवंविध्यादिदेहान्तमहावाक्यकलेवरः ॥
वस्तुतो निर्व्विशेषात्मा चिदात्मारायणोऽव्ययम् :
यन्महावाक्यसिद्धान्तमुक्तचिन्तैकगोचरम् ॥
वासुदेवेन्द्रसंज्ञ' तं नौमि नारायणं महः ॥

Colophon. इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्रीवासुदेवेन्द्रसरस्वतीचरणकमलभ्रमर-रन्देन्द्रप्रस्थान्त-रामचन्द्रेन्द्रयतिना अष्टोत्तरशतोपनिषत्सारसंग्रहभूताष्टोत्तर-सहस्रमहावाक्यरत्नावली परिपूर्णा । ॐ तत्सत् ॥

विषय । अत्र प्रथमं ऋगादिक्रमेण वेदविभागनिरूपणं तेषां शाखाप्रशाखाकीर्त्तनञ्च । ततो महावाक्यरत्नावल्यधिकारिनिरूपणं, अष्टोत्तरशतोपनिषदां शाखाभेदनिरूपणं, ईशाद्यष्टोत्तर-शतोपनिषदां सारसंग्रहश्चेति ।

---

**No. 10.** असाधारणसिद्धान्तरहस्यम् . By मथुरानाथतर्कवागीशः. Substance, country-made paper, $16\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 16. Lines, 8 on a page. Extent, 700 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinipura, Post Office Khaḍār grāma Kurān, Paṇḍita Ambikā Caraṇa Vidyasāgara. Appearance, new. Prose. Correct.

**Beginning.** श्रीदक्षिणकालिका स्फुरतु मम चित्ते ॥ सर्व्वमनित्यं प्रमेयत्वादित्यादेः स्वमते साधारणत्वात् मध्यानित्याभिप्रदर्शनासङ्गतेराह सम्प्रदायेति । मध्यते निश्चितसाध्यतदभाववद्दृष्टान्तेरेव साधारणतया उक्तत्वेनोरनुपसंहार्य्यत्वा-साधारणत्वदशायामसत्त्वमेवेति भावः । ननु मणिकारमते वास्तवसाध्या-भाववद्दृष्टान्तरेव साधारण इत्येव कुतोऽवधारितमित्यत आह स्वतएवेति स्वमते मध्य स्वद्यत्वादेवेत्यर्थः । अपे सिद्धान्तग्रन्थे निश्चितसाध्यवत्तद्न्य-दृष्टान्तत्वमित्यत्र तत्पदस्य प्रक्रान्तनिश्चितसाध्यवत्परामर्शकत्वे साध्यसंशय-विषयीभूतपक्षे स्वपक्षे च वर्त्तमानसद्धेतावतिप्रसङ्ग इत्यतस्तस्य साध्यवत्त्वाव-परतां स्पष्टयितुं व्याचष्टे निश्चित इति । इत्यादि ।

**End.** तथाच प्रतिहेतुपरामर्शेऽप्रामाण्यज्ञानमिति पर्य्यवसितार्थः । एवेनाप्राम्य-न्यादिज्ञानस्यानुमितिविरोधिव्याप्यवत्ताज्ञानत्वेऽकिञ्चित्करता व्याप्यवत्ता-

परामर्शप्रतिबन्धात् दुर्घटता वेत्यसङ्गतिरिति पराक्त अप्रामाण्यज्ञानस्याप्य-
स्यादेर्धर्म्मितावच्छेदकानवच्छेदकानवच्छिन्न एव चेतो भानात् तस्य व्याप्ति-
निश्चयाप्रतिबध्यतया विरोधिनिश्चयोत्तेजकीभूततत्समवधाने प्रकृतसाध्यानु-
मितिसम्भवात् ॥

**Colophon.** ॐ काली जयति । इत्यसाधारणसिद्धान्तरहस्यम् ।
श्रीकालीचरणाम्भोजे धर्म्मकामार्थमुक्तिदे ।
मनो धावतु मे नित्यं द्विरेफ इव पङ्कजे ॥

**विषयः ।** तत्त्वचिन्तामणीयानुमानखण्डान्तर्गतासाधारणग्रन्थस्य व्याख्यानम् ।

---

**No. 11.** आख्यातवादविवरणम्. Substance, country-made paper, 18 x 5 inches. Folia, 6. Lines, 9 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Vardhamāna, Kājoḍāgrāma, Post Office Aṇḍāl, Yatīndranātha Nāyek. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ श्रीकृष्णः शरणम् । नन्वाख्यातस्य यत्नवाच्यत्वं शक्तिग्राहकं विना कथ-
मवधारितमतमाह पचतीति ॥ इत्यादि ।

**End.** संयोगानुकूलस्य व्यापारस्य तरोरपि सत्वात् त्यजति द्रव्य इत्यपि स्यादित्यर्थः ।
गुरुमतमाह तचेति घटं जानातीत्यसङ्गतेराह कश्चिदिति ॥ ० ॥

**Colophon** इत्याख्यातवादविवरणं सम्पूर्णम् ॥ * ॥

**विषयः ।** आख्यातवादाख्यग्रन्थस्य व्याख्यानम् ॥

---

**No. 12.** आख्यातव्याख्यानम्. By विश्वेश्वरतर्काचार्य्यः. Substance, palm-leaf, 17 x 1 inches. Folia, 101. Lines, 3 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura Vidgā, Paṇḍita Içānacandra Smṛtipañcānana. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ परमदेवतायै नमः । द्विवंचनम् । अधिकारसूत्रमिदं वक्ष्यमाणानां
संक्षेपाय कार्य्याकार्य्यनिमित्तानां यदुदीरणं सोऽधिकारः ॥ इत्यादि ।

**End.** अन्तस्यैव निमित्तमित्यनेन समवायलक्षणः सम्बन्धः प्रतिपादितः । अधि-
कारमतेस्तथा दर्शनादाद्य सपरस्तराया इति ॥ * ॥

**Colophon.** इति महामहोपाध्यायबिल्वेश्वरतर्काचार्य्यविरचिताख्यातव्याख्यानं समाप्तम् ॥

**विषयः ।** कातन्त्रीयाख्यातपादस्य व्याख्यानम् ॥

---

**No. 13.** आचारोल्लासः. (परशुरामप्रकाशीयः) By खड्गोरायपण्डितः. Substance, country-made paper, 19 × 4 inches. Folia, 103. Lines, 7 on a page. Extent, 3,600 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta Çyāmapukura, Bābu Nagendranātha Vasu. Appearance, fresh. Verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

नित्योत्तमाङ्गगण्डमण्डलमिलद्गङ्गावलीमङ्गल-
ध्यानाकर्णनिमीलिताक्षयुगलव्याकृद्दगजास्यप्रभुः ।
श्रीविश्वनाथनगरी जयति त्रिलोक्यां
वाराणसीति सुलभा किल यत्र मुक्तिः ।
तत्र श्रुतिस्मृतिपुराणविवादविज्ञो
धर्म्माधिकार्य्यथ महीपतिपण्डितोऽभूत् ॥
तस्मादभूत् श्रीमदनन्तपण्डितो
यः सर्व्वशास्त्राभिनिवेशमण्डितः ।
तस्यापि सूनुः किल कृष्णपण्डितः
काश्य मे धर्म्मं सचि येन खण्डितम् ॥ (?)
तदीयसूनुः सकलार्थवेत्ता
निरन्तरालोचितधर्म्मशास्त्रः ।
ततः स नारायणपण्डितोऽपि
समादिशद्ग्रन्थमिमं विधातुम् ॥
तं धर्म्मशास्त्रार्थविवादनिष्ठं
पुत्रं कनिष्ठं हि गुणैर्गरिष्ठम् ॥
श्रीनारायणपण्डितस्य तनयः श्रीनीलकण्ठानुजः
खण्डोराय इति श्रुतिस्मृतिपुराणार्थं समुद्धृत्य च ।
नत्वा देवमभीष्टदं स्वपितरौ विद्वज्जनप्रीतये
+ + कुरुते निबन्धमखिलग्रन्थार्थसाराश्रयम् ॥

मन्वाद्याश्च स्मृतीः सर्व्वाः पुराणान्यखिलानि च ।
नारायणं भारतञ्च विष्णुधर्म्मोत्तरं तथा ॥
शाम्बपुराणञ्च तथा भविष्यञ्च विशेषतः ।
वैखानसाद्यागमांश्च तथा शैवागमादिकान् ॥
मेधातिथिं कल्पतरुं कालादर्शं मिताक्षराम् ।
हेमाद्रिञ्च पराशरमाधवं स्मृतिचन्द्रिकाम् ॥
स्मृत्यर्थसारं मदनरत्नञ्च स्मृतिदर्पणम् ।
प्रयोगपारिजातञ्च तथा सिद्धान्तशेखरम् ॥
न्यायपाणिनिमीमांसा आगमाः परिशीलिताः ।
तथापि बालिशत्वाच्च धार्ष्ट्यमालम्ब्य यन्मया ॥
नाम्ना हि परशुरामप्रकाश इति विश्रुतो ग्रन्थः ।
प्रकटयतु धर्म्मतत्त्वं तमसावृतमर्थतत्त्वमिव । इत्यादि ।

**End.** वामनं खड्गिनञ्चैव दुःस्वप्नेषु सदा स्मरेत् ।
एवमन्योऽपि सप्तशतीजपादिविधिर्ज्ञेयः । अत्र दुःस्वप्नतारतम्येन शान्तिभेदेन च व्यवस्था ज्ञेया । इति स्वप्नप्रकरणम् ।

**Colophon.** इति परशुरामप्रकाशे निद्रामयूखः । इति शाकद्वीपीय कुलावतंसचोखिन-मिश्रात्मजपण्डितमण्डलीमण्डनायमान—सार्व्वभौमश्रवणाणी-रसालरायपदवी-विराजमानमानोन्नत-श्रीमत्परशुराममिश्रकारिते वाराणसीस्थधर्म्माधिकारि-नारायणपण्डितात्मज-खण्डोराय-पण्डितविरचिते परशुरामप्रकाशे आचारोल्लासः समाप्तः ॥ * ॥

**विषयः ।** आदौ प्रबोधमयूखः । तत्र आचारादिकथनम् । आचारनिरूपणम् । चारप्रशंसा । प्रबोधकालनिरूपणम् । प्रातर्जप्यादिकथनम् । माङ्गल्यदर्शनादिनिरूपणञ्च । २ य मयूखे, मृत्तिकाग्रहणे कालादिनियमः । मूत्रपुरीषत्यागविध्यादिः । शौचविधिः । गण्डूष-विध्यादिश्च । ३ ये स्नानमयूखे, दन्तकाष्ठप्रमाणकथनम् । निषिद्धदन्तकाष्ठादिकथनम् । दन्तधावनकालादिकथनम् । केशप्रसाधनादिकथनञ्च । ४ र्थे मयूखे, स्नानभेदादिकथनम् । स्नानमन्त्रकथनम् । प्रातःस्नानविधिः । नैमित्तिकस्नानादिविधिश्च । ५ मे वस्त्रमयूखे, परिधेयवस्त्रादिकथनम् । परिधानविध्यादिकथनञ्च । ६ ष्ठे मयूखे, ऊर्द्ध्वपुण्ड्रप्रशंसादिः । तुलसी-काष्ठमालाधारणविध्यादिः । विभूतिमाहात्म्यकथनम् । भस्मधारणनिन्दादिकथनम् । विभूति-धारणाधिकारिकथनम् । रुद्राक्षधारणादिनियमश्च । ७ मे मयूखे, सन्ध्याकर्म्मप्रशंसादिकथनम् । सन्ध्याशब्दार्थकथनम् । सन्ध्यानुष्ठानविध्यादिः । प्राणायाममाहात्म्यादिकथनम् । मार्जनादि-

विधिः । अर्घ्यदानविध्यादिः । गायत्रीमहिमकथनम् । गायत्रीजपविध्यादिः । जपयोग्यप्रदेशादिकथनम् । जपमालालक्षणादिकथनम् । सन्ध्याक्रमकथनम् । सन्ध्याविधिनिषेधादिश्च । ८ मे मयूखे, होमप्रशंसादिः । होमकालादिनिरूपणम् । होमविधिश्च । ९ मे मयूखे, दानप्रशंसा । नित्यदानविध्यादिश्च । १० मे मयूखे, अभिवादनविधिः । प्रत्यभिवादनविध्यादिश्च । ११ शे मयूखे, वेदाभ्यासप्रशंसा । वेदाध्ययनविध्यादिः । विद्यादानफलम् । अनध्यायदिनादिनिरूपणञ्च । १२ शे मयूखे, कुशपवित्रकालादिकथनम् । कुशप्रतिनिधिकथनञ्च । १३ शे मयूखे, धनार्जनप्रशंसा । ब्राह्मणादीनां वृत्तिकथनम् । खड्गानुष्ठानफलादिकथनञ्च । १४ शे मयूखे, माध्याह्निकस्नानादिविधिः । ग्टहस्नानविधिश्च । १५ शे मयूखे, ब्रह्मयज्ञप्रशंसादिः । तत्कालनियमादिः । तर्पणविधिश्च । १६ शे मयूखे, देवपूजाप्रशंसा । देवपूजाकालनिरूपणम् । अधिकारिनिरूपणम् । पूजास्थानादिनिरूपणम् । शालग्राममाहात्म्यादिकथनम् । शालग्रामलक्षणनिरूपणम् । दामोदरादीनां लक्षणनिरूपणम् । उपचारद्रव्यादिनिवेदनविधिः । पुष्पमाहात्म्यम् । चयनविध्यादिः । विष्णुपूजायां निषिद्धपुष्पादिकथनम् । पञ्चायतनक्रमकथनम् । पार्थिवपूजाविध्यादिः । गुरुपूजादिः । निर्माल्यादिधारणविधिः । देवार्चनाकरणे प्रायश्चित्तादिकथनञ्च । १७ शे मयूखे, पञ्चयज्ञप्रशंसामुखेन तदकरणे दोषकीर्त्तनम् । वैश्वदेवविध्यादिः । नित्यश्राद्धविधिः । अन्नदानफलादिकथनञ्च । १८ शे मयूखे, भोज्याभोज्यनिरूपणम् । भोजनकालादिकथनम् । भोजनोत्तरकर्म्मादिनिरूपणम् । ताम्बूलभक्षणविध्यादिश्च । १९ शे मयूखे, विश्रामनियमादिकथनम् । सायंसन्ध्याविध्यादिश्च । २० शे मयूखे, निद्राविधिः । भार्य्यागमनविध्यादिः । स्वप्नानां शुभाशुभत्वकथनञ्च । २१ शे मयूखे, श्राद्धस्वरूपकथनम् । श्राद्धाकरणे दोषकथनम् । अनुकल्पविधिश्च । २२ शे मयूखे, श्राद्धाद्यधिकारिनिरूपणम् । २३ शे मयूखे, श्राद्धकालादिनिरूपणम् । षोड़शश्राद्धकालादिनिरूपणम् । सपिण्डीकरणव्यवस्थादिः । वृद्धिश्राद्धव्यवस्थादिश्च । २४ शे मयूखे, श्राद्धयोग्यप्रदेशादिकथनम् । २५ शे मयूखे, श्राद्धार्हब्राह्मणपरीक्षा । शाकद्वीपिब्राह्मणानां शाकद्वीपस्य च निरूपणम् शाकद्वीपिलोकानां स्वरूपकथनम् । तथा शाकद्वीपिब्राह्मणानां स्वरूपकथनम् । शाकद्वीपिब्राह्मणानां उत्पत्तिकथनम् । श्राद्धीयब्राह्मणनिमन्त्रणविध्यादिश्च । २६ शे मयूखे, श्राद्धपाकार्हमन्त्रादिकथनम् । श्राद्धयोग्यधान्यादिनिरूपणम् । श्राद्धविहितभोजनपात्रादिनिरूपणञ्च २७ शे मयूखे, श्राद्धपरिभाषा । २८ शे मयूखे, अग्नौकरणहोमविध्यादिः । श्राद्धभोजनकालादिनिरूपणम् । विकिरविध्यादिः । पिण्डप्रमाणादिकथनम् । पिण्डदानविध्यादिश्च २९ शे मयूखे, वैश्वदेवश्राद्धशेषभोजनविध्यादिः । ३० शे मयूखे, श्राद्धाङ्गतर्पणविध्यादिः पार्व्वणश्राद्धानुक्रमश्चेति ।

---

**No. 14.** **आचार्य्यानुमानटिप्पनी.** By **गदाधरभट्टाचार्य्यः.** Substance, country-made paper, 18 × 4½ inches. Folia, 14. Lines, 9 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinipura, Post Office, Khaḍār, grāma Kurāna, Paṇḍita Ambikācaraṇa Vidyāsāgara. Appearance, new. Prose. Correct.

**Beginning.** श्रीकालीचरणाम्भोज हृदि तिष्ठ सदा मम ।
उपलक्षणस्यैव परिचायकत्वेन प्रसिद्धतया परिचायकत्वाप्रतिक्षेपेण लिङ्ग-मेव विशेषकमिति विशेषणत्वापगमो मूलेऽसङ्गतः । न च परिचायकत्व-प्रतिक्षेपपर एवायं ग्रन्थः । अग्निमस्येन्द्रियसंयोगपरिचायकत्वाभिधानस्यासङ्गते-रत उपलक्षणविशेषणसाधारणपरिचायकत्वपरतां प्रकृतेर्दर्शयति परिचाय-कत्वमिति । इत्यादि ।

**End.** अयञ्चाभ्युपगमवादः तत्तत्पक्षतावच्छेदकावच्छिन्नविशेष्यकसकलाद्यनुमितित्व-रूपविशेषकार्य्यकारणतावच्छेदकगर्भे सकलानुमितित्वादिनिवेशादेवोपपत्तेस्तद-वच्छिन्नं प्रति हेतुत्वान्तरस्य निर्युक्तिकत्वात् सुखादिसाधारणात्मगुणत्वावच्छिन्नं प्रति मनस्त्वेन कारणताकल्पनात् तत एवानुमितेः सकरणकत्वनिर्व्वाहे अनुमितित्वावच्छिन्नं प्रति ज्ञानत्वादिना हेतुत्वमपि निर्युक्तिकमित्यस्वरस-वीजमत्र बोद्धव्यम् ।

**Colophon.** इति आचार्य्यानुमानगदाधरीयटिप्पनी समाप्ता । श्रीकाली मम चेतसि स्फुरतु । श्रीरामः ।

**विषयः ।** तत्त्वचिन्तामणिदीधितेरनुमानखण्डीयानुमितिग्रन्थस्य आचार्य्यानुमानांशस्य व्याख्येयम् ।

---

**No. 15.** **आत्ममन्दिरस्तोत्रम्.** By **यामुनाचार्य्यः.** Substance, country-made paper, 12 × 4 inches. Folia, 7. Lines, 7 on a page. Extent, 150 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinipura, Candrakoṇā, Mahānta Bharata Rāmānuja Dāsa. Appearance, new. Verse Incorrect.

**Beginning.** श्रीमते रामानुजाय नमः ।
ॐ स्वादयन्निह सर्व्वेषां × × × × सुदुर्पदम् ।
स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वयम् ॥

नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥
नमो यामुनपादाब्ज रेणुभिः पावितात्मने ।
विदिताखिलवेद्याय गुरवे विदितात्मने ॥
+ + + + × +
नमो नमो मधुजिदङ्घ्रिसरोजतत्त्व
ज्ञानानुरागमहिमातिशयान्तसीम्ने ।
नाथाय नाथमुनये + + + + + +
नित्यं यदि + चरणौ शरणं मदीयम् ॥
भूयो नमः परिमिताच्युतभक्तितत्त्व-
ज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्तिं
+ + + नाथमुनये यमिनां वराय ॥ इत्यादि

End
ननु प्रपन्नः सकृदेव नाथ
तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां
मदेकवर्ज्जं किमिदं व्रतं ते ॥
(?) प्रकृतिमत् त्वच्चरणारविन्दे
प्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य
प्रसीद मद्वृत्तमचिन्तयित्वा ॥
यत्पादाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

Colophon. इति श्रीयामुनाचार्य्यविरचितायां (?) आत्मनन्दिरस्तोत्रं सम्पूर्णम् ॥

विषयः। यामुनाचार्य्यस्य स्तुतिः ।

---

**No. 16.** आनन्दलहरीटीका. By रामभद्रचूडामणिः. Substance, country-made paper, $19 \times 3\frac{1}{2}$ inches. Folia, 25. Lines, 6 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, ? Place of deposit, District Hugli, Khānākul Kṛṣṇanagara, Paṇḍita Bramhanārāyaṇa Vidyālaŋkāra. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** नत्वा श्रीरामपितरौ रामशङ्करशर्म्मणा ।
आनन्दलहरीव्याख्या तन्यते रामतुष्टये ॥
अद्वैतवस्तुः कृतिनो ... ... व्याख्या कृताऽस्या बहुधा पुरा या ।
द्वैतैरभुक्तोक्तिरथैर्निरस्ता गृह्णन्त्विमां मे रघुनाथ धीराः ॥
अत्र धीरपरम्परापरिप्राप्तमयाद्वैतवादविमुखैः शङ्कर इव श्रीशङ्कराचार्य्यैः शिव इति मङ्गलप्रतिपादकं निर्दिशन् स्वेष्टदेवं श्रीरामचन्द्रं स्तोतुमारभमाणः परमात्मनस्तस्यातिपुण्यवतां चर्य्यादीनामेवाराध्यतया अहमकृतपुण्यः सन् किं स्तौमीत्याह शिव इत्यादि — शिवशब्दोऽत्र श्रीरामपरः नित्ये परे ब्रह्मणि शिवे इत्यध्यात्मरामायणात् सर्व्वदेवात्मकः शिवः ॐ तत्सत् इत्येतद्रामचन्द्रस्य नामाष्टोत्तरं शतमिति पद्मपुराणाच ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ...
देवो दीप्तिमान् पुरुषस्तेजोरूपश्चेद् यदि शक्तियुक्तो भवति तदा खलु निश्चितं स्पन्दितुमपि न कुशलः न समर्थः शिरश्चालनभेदमुक्तश्च ...
... ... ... ... ... ... ... ... अतो हे हरिहरविरिञ्च्यादिभिरप्याराध्य विष्णुशिवब्रह्मेन्द्रप्रभृतिभिरप्याराधनीय स्वस्वकार्य्यनिर्व्वाहायाभ्यर्थनीय ... ... ... ... अं अक्षराणामकारोऽस्मीति अकारः स्यात् परं ब्रह्मेति चोक्ताकारलक्षणं त्वां प्रणन्तुं प्रकृष्टेन भक्त्यतिशयादिना नमस्कर्त्तुं स्तोतुं वा ... ... अकृतपुण्यः नास्ति कृतपुण्यं यस्य स जनस्तथा च कृतपुण्याभाववान् जनः अथवा न कृतं पुण्यं येन सः ... ... कथं प्रभवति समर्थो भवति ॥ इत्यादि ।

**End.** अथ भक्त्या पुनरप्याह कठिने इत्यादि — हे सीतापते अचरोऽपि त्वं यथा आदेवि किरातकन्यकाभिः सम्यग्दीप्तिमत्किरातबालाभिर्युतेऽपि किञ्च निश्चितं तव विष्णुशैले विन्ध्यपर्व्वते कृपय तत्कृपां विना तासां तत्पर्व्वतस्य च प्रकाशकत्वाभावात् । न च कथं चित्रकूटादिं विहाय विन्ध्योपादानमिति वाच्यं तद्भक्ताया निवासतस्तदुक्तं धन्यासि कृतपुण्यासि विष्णुभक्तासि पार्व्वतीति विन्ध्याचलनिवासिनीत्यादीति ध्येयम् । तथा मम मानसे कठिने काठिन्येऽपि निर्जितशारदारविन्दौ अनेनातिकोमलावपि तव चरणौ निधत्स्व निधापयेत्यर्थः ॥ १०५ ॥ ( अतःपरं खण्डितम् )

**विषयः ।** शङ्कराचार्य्यकृतानन्दलहरीस्तोत्रस्य श्रीरामचन्द्रपक्षे व्याख्यानम् ।

---

No. 17. आनन्दलहरीटीका । (हरिभक्तिसुधोदया) By हरिनारायणः. Substance, country-made paper, 14×4 inches. Folia, 37. Lines, 12 on a page. Extent, 1,400 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Āḍāihājār, Paṇḍita Candrakānta Vidyālaṇkāra. Appearance, old Prose. Correct.

**Beginning.** ॐ नमः परमदेवतायै ।

हरिनारायणः श्रीमान् विश्वामित्रकुलोद्भवः ।
तनोत्यानन्दलहरीहरिभक्तिसुधोदयाम् ॥

अथ खलु दुस्तरदुःखसंघातघोरतरसंसारसागरान्तर्दाममोहसन्तानप्रबल-वडवानलज्वालाजालकवलनविकलान् सकललोकानालोक्यात्मनस्तत्रामनि-दानजगदुपादानकारण-परदेवतासमाराधनोपाय-मन्त्रयन्त्रध्यानावधानप्रस-न्नान्तःकरणो भगवान् शङ्कराचार्य्यो विचार्य्यातिरहस्यतन्त्राण्यनेकशो जन्म-मरणाद्यनेकक्लेशरूपामङ्गलरचितां मन्त्रयन्त्रध्यानार्चनभजनप्रकारं प्रकाशयन् भवानीस्तुतिमारभते । शिव इत्यादि । शिवः शक्त्येति शिवोऽविद्या तत्कार्य्योपार्जितजन्ममरणाद्यनेकक्लेशरूपा मङ्गलरहितत्वात् कल्याणरूपः सदाशिवः केवलनिर्गुणं ब्रह्म वा शक्त्या कर्त्तुमकर्त्तुमन्यथा कर्त्तुं शक्त्या त्रिगुणात्मिकया अघटनघटनपटीयस्या प्रकृत्या यदि युक्तः परिष्वक्तो भवति तदा प्रभवितुं प्रभुतां विधातुं शक्तः समर्थो भवति । तथाचेच्छाज्ञान-क्रियात्मकशक्तिसम्बन्धादेव गुणातीतस्यापीश्वरत्वात् सृष्ट्यादिकार्य्ये प्रवृत्ति-रिति भावः । इत्यादि ॥

**End.** प्रकारान्तरेणापि पुनस्तन्नाममाह पवित्रीकर्त्तुमिति ।

पवित्रीकर्त्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे ॥

हे पशुपतिपराधीनहृदये महादेवायत्तचित्ते अनघे निष्पापे ध्रुवं निश्चितं नोऽस्मान् पवित्रीकर्त्तुं अरुणधवलश्यामरुचिभी रक्तशुक्लकृष्णकान्तिभिर्नेत्रैः शोणो नदः गङ्गा शुक्ला तपनतनया कालिन्दी च कृष्णा इत्येतन्नामकानां त्रयाणां तीर्थानां अमुं सम्भेदं सङ्गमं उपनयसि प्रापयसि कीदृशैर्नेत्रैः दया-मित्रैर्दयैव मित्रं येषां तैः ... ... ... ... ... ... ... ... ...
विष्णुपक्षेऽपि अये इति सम्बोधनं पशुपतिपराधीनहृदिति गङ्गाविशेषणं

अथवा पशुपतिपराधीनहृदये इति सम्बुद्धिरेव गङ्गाविशेषणं इं कामं ददातीति इदः क्षणात्स्वं क्षणवर्णत्वात् तत्साहाय्यं वा ददातीति इदया यमुना अमघे स्थाने पूर्ववन्निमित्तसप्तमी वा अनघे निष्पापे जने दयाभिर्मेरिति वान्वयः शेषं समानमिति ।

**Colophon.** ( अतःपरं खण्डितम् )

**विषयः।** शङ्कराचार्य्यकृताया आनन्दलहर्य्याः शक्तिपक्षे विष्णुपक्षे च व्याख्यानम् ।

---

**No. 18.** आनन्दलहरीटीका. By श्रीकान्तभट्टः. Substance, country-made paper, $8 \times 3\frac{1}{2}$ inches. Folia, 63. Lines, 11–14 on a page. Extent, 1,520 çlokas. Character, Nāgara. Date, Sm. 1851. Place of deposit, Benares city, Govinda Bhaṭṭa Solāpurkār. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । श्रीगुरुचरणकमलेभ्यो नमः ।
अमलकमलनेत्रा पूर्णशीतांशुवक्त्रा
दनुजमनुजदेवैर्वन्दिता सिद्धसंघैः ।
उदिततरणितेजोमण्डलारक्तकान्ति-
र्दिशतु सकलसिद्धिं सुन्दरी साधकेभ्यः ॥
श्रीरामश्रीगुरुपदाम्बुजभक्तिपूतः
श्रीकान्तभट्टकरुणाप्तसमस्तविद्यः ।
गङ्गाधरेण गुरुणोदितशास्त्रमुद्रां
टीकां करोति विबुधः कविराजशर्म्मा ॥ इत्यादि ।

**End.** हे वाचां जननि वाचां मातर्मदीयाभि र्वाग्भि र्मम वाग्भिस्तवेयं स्तुतिः ।
यतस्त्वं वाचां जननी मम मूढस्यायमभिमानः ॥ • ॥

**Colophon.** इति श्रीकान्तभट्टविरचितं सौन्दर्य्यलहरीटिप्पनं सम्पूर्णम् ॥ सम्वत् १८५१ ॥

**विषयः।** शङ्कराचार्य्यकृतानन्दलहर्य्या व्याख्यानम् ।

---

**No. 19.** आपस्तम्बसूत्रे गृह्यप्रश्नः. Substance, country-made paper, $10 \times 3$ inches. Folia, 12. Lines, 9 on a page. Extent, 756 Sūtras. Character, Bengali. Date, ? Place of deposit, Benaras city, Govinda Bhaṭṭa Solāpurkār. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । अथ कर्म्माण्याचाराद्यानि गृह्यन्त उदगयन-पूर्व्व-पक्षाहः-पुण्याहेषु कार्य्याणि यज्ञोपवीतिना प्रदक्षिणम् । पुरस्तादुदग्वोपक्रमः तथापवर्गः । इत्यादि ।

**End.** स्वहृदः समवेतान्मन्त्रयतः ॥ मधाभिर्गावो गृह्यन्ते । येन जुह्वोति तदग्नौ प्रतितप्य । अथ कर्म्माण्याचाराद्यानि गृह्यन्ते । इत्यादि ॥

**Colophon.** इत्यापस्तम्बसूत्रे गृह्यप्रश्नः समाप्तः ॥ * ॥

**विषयः ।** कृष्णयजुर्व्वेदीयानां गृह्यकर्मकथनम् ।

---

**No. 20. आयप्रकरणम् .** Substance, country-made paper, $7 \times 2\frac{1}{2}$ inches. Folia, 4. Lines, 9 on a page. Extent, 80 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares city, Govinda Bhaṭṭa Solāpurkār. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । आयप्रकरणम् । दीर्घत्वेन विस्तारं गुणयित्वा वङ्भि-भाजयित्वा शेषं आयः स्यात् । अष्टौ आयाः ।

ध्वजधूमोऽथ सिंहः श्वा वृषभश्च खरो गजः ।

ध्वांक्षश्चैव क्रमोद्भूते रायाष्टकमुदाहृतम् ॥

एतत् फलमुक्तं गर्गेण ॥ इत्यादि ।

**End.** सेव्यसेवकयोश्चैव गृह-तत्स्वामिनोरपि ।

परस्परं मित्रयोश्च एकनाडी प्रशस्यते ॥ इति ।

**Colophon.** अतःपरं खण्डितम् ।

**विषयः ।** ज्योतिषोक्तशुभाशुभवचनसंग्रहः ॥

---

**No. 21. आह्निककारिका .** Substance, country-made paper, $10 \times 3\frac{1}{2}$ inches. Folia, 8. Lines, 13 on a page. Extent, 208 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares city, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम् ।

गुरुं विष्णुं नमस्कृत्य मातापित्रोस्तथैव च ॥

अस्तं गच्छति तिग्मांशौ वध्याधिगत एव यः । (?)
क्षपेत वागयतः स्थित्वा समस्तामपि तां निशाम् ॥ इत्यादि ॥

**End.** मन्त्रादेवं समाराध्य त्र्यम्बकमन्त्रं जपेत् ।
सर्व्वान् कामानवाप्नोति शम्भोस्तस्य प्रसादतः ॥

**Colophon.** इति शौनकीयत्र्यम्बककल्पः ॥ * ॥

**विषयः ।** सूर्य्योदयमारभ्य अस्तं यावत् विप्राणां नित्यकर्म्मकथनम् ।

---

**No. 22.** उत्पलारण्यमाहात्म्यम् . (ब्रह्मसंहितान्तर्गतम्). Substance, country-made paper, 12 × 5 inches. Folia, 20. Lines, 18 on a page. Extent, 1,200 çlokas. Character, Nāgara. Date, Sм. 1933. Place of deposit, Hātuā Mahārājā's Library. Appearance, new. Verse. Correct.

**Beginning.** ॐ श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुचरणकमलेभ्यो नमः ।
श्रीगङ्गाभागीरथ्यै नमः ।
कृष्णं कृष्णाग्रजं राधां ललितां ललितेक्षणाम् ।
वन्दे यशोदां गोपीश्च वन्दे मूर्द्ध्ना निरन्तरम् ॥
व्यासं वैयासकिं सूतं शौनकादीन् मुनीश्वरान् ।
गिरिजां गिरिजाकान्तं प्रणमामि सदैव हि ॥

मुनय ऊचुः ।

अरण्यानां नवानां यन्माहात्म्यं गदितं त्वया ।
कुतस्तत्रोत्पलारण्यमाधिक्येन निरूपितम् ॥
अतो येन निदानेन तत् प्रशस्तमभूद् यतः ।
तन्नः कथय सर्व्वज्ञ श्रद्धया समुपस्थितान् ॥
कथामृतं नैव वयं त्वन्मुखाम्भोजनिःसृतम् ।
कदापि न विरंस्यामः पिबन्तोऽपि मुहुर्मुहुः ॥

सूत उवाच ।

आकर्णयध्वं तत्सर्व्वं यन्मां पृच्छथ सत्तमाः ।
छिनोमि युष्मत्सन्देहानुमाप्रश्नानुसारतः ॥ इत्यादि ।

**End.** न चोत्पलानां माहात्म्यं भवान्यै भूतनायकः ।
अवर्णयद् यथेदानीं तद्गुह्यं श्रोतुमर्हथ ॥
यः करोत्यूर्ज्जितां बुद्धिं हृदयस्थः सदा मम ।
तस्मै कृष्णाय महते नमः कारुण्यवार्द्धये ॥
या इमाः कथिता रम्याः कथाः क्षेत्रस्य वेधसः ।
सदैव देवदेवेशस्ताभिः कृष्णः प्रसीदतु ॥

**Colophon.** इति श्रीब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये पार्व्वतीश्वरसंवादे भवान्याः पञ्चमूर्त्तिकथनं नामैकविंशोऽध्यायः । ॐ तत्सत् । शुभम् । संवत् । १९२२ ।

**विषयः ।** इति श्रीब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये ब्रह्मस्तुतिर्नाम प्रथमोऽध्यायः । इति श्रीब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये द्वितीयोऽध्यायः । इति श्रीब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये ब्रह्मयज्ञवर्णनं नाम तृतीयोऽध्यायः । इति श्रीब्र० सं० उत्पलारण्यमाहात्म्ये वर्हिष्मतीवर्णनं नाम चतुर्थोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये गङ्गावतरणं नाम पञ्चमोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये ब्रह्मावर्त्तक्षेत्रमाहात्म्यं नाम षष्ठोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये ब्रह्मावर्त्तमहिमा नाम सप्तमोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये ब्रह्मावर्त्तक्षेत्रयात्रावर्णनं नामाष्टमोऽध्यायः । इति 'ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये ब्रह्मावर्त्तक्षेत्रयात्रादिफलकथनं नाम नवमोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये स्नानतीर्थवर्णनं नाम दशमोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये कपिलेश्वरवर्णनं नामैकादशोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये सीतातीर्थवर्णनं नाम द्वादशोऽध्यायः । इति ब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये लक्ष्मणतीर्थकथनं नाम त्रयोदशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये ध्रुवक्षेत्रमाहात्म्यकथनं नाम चतुर्दशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये शुकतीर्थमाहात्म्यकथनं नाम पञ्चदशोऽध्यायः । ‑ति ब्र० सं० उत्पलारण्यमाहात्म्ये रामतीर्थवर्णनं नाम षोडशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये दशाश्वमेधतीर्थमाहात्म्यं नाम सप्तदशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये गोचरणतीर्थमाहात्म्यं नामाष्टादशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये अष्टतीर्थयात्राविधिः नामैकोनविंशोऽध्यायः । इति ब्र० सं० उत्पलारण्यमाहात्म्ये अष्टतीर्थयात्राकथनं नाम विंशोऽध्यायः । इति श्रीब्रह्मसंहितायामुत्पलारण्यमाहात्म्ये पार्व्वतीश्वरसंवादे भवान्याः पञ्चमूर्त्तिकथनं नामैकविंशोऽध्यायः ॥

---

**No. 23.** उपसर्गवृत्तिः. By भरतसेनः. Substance, country-made paper, 13 × 3 inches. Folia, 6. Lines, 5 on a page Extent, 150 çlokas. Character, Bengali. Date, ? Place of deposit, Dhātrīgrāma, District Bardhamāna, Paṇḍita Ṣaṣṭhīdāsa Bhaṭṭācāryya. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीहरिः शरणम् ।
पार्व्वतीशङ्करौ नत्वा बालानामुपकारिका ।
भरतेनोपसर्गाणां वृत्तिः स्वल्पा विधीयते ॥ इत्यादि ॥

**End.** प्रसिद्धा गदिता ह्यर्थाः शेषा ज्ञेयाः प्रयोगतः ।

**Colophon.** इति वैद्य-गौराङ्गमल्लिकात्मज-श्रीभरतसेनविरचितोपसर्गवृत्तिः समाप्ता ॥०॥

**विषयः ।** प्रपराद्युपसर्गाणामर्थादिनिरूपणम् ।

---

**No. 24.** उपासनविनोदः. Substance, country-made paper, 12½ × 5 inches. Folia, 17. Lines, 13 on a page. Extent, 500 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Bharata Rāmānuja Dāsa. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीरामचन्द्राय नमः ।
नत्वा रामं परं ब्रह्म सच्चिदानन्दविग्रहम् ।
उपासनविनोदोऽयं क्रियते ज्ञानसिद्धये ॥
इह खलु प्रथमं तावत् स्वाध्यायोऽध्येतव्य इत्यध्यायशब्दवाच्यवेदाक्षरराशे
र्ग्रहणं विधीयते । तत्राध्ययनं किंरूपं कथञ्च कर्त्तव्यमित्यपेक्षायां अष्टवर्षं
ब्राह्मणमुपनीतमध्यापयेत् ।
श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयेत मासान् विप्रोऽर्द्धपञ्चमान् ॥
इत्यादि व्रतनियमविशेषोपदेशे ... ... ... विधीयन्ते ॥ इत्यादि ॥

**End.** अतो जन्मादिवाक्ये च जगत्कर्त्तृत्वोपादानत्वयोर्ब्रह्मलक्षणतया विवक्षित-
त्वात् लक्षणस्य ब्रह्मपदार्थस्य दुरपह्नवमेवेति । उक्तन्यायेन ब्रह्मशब्दस्य
मुख्यार्थः सिद्धः । उक्तञ्च नारदे ।
वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यार्थश्च महामुने ॥

यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्रेत्युपचारतः ॥ इति ।
ब्रह्मशब्दस्य परमात्मन्येव मुख्यवृत्तिर्नान्यत्रेति ॥

**Colophon.** (अतःपरं खण्डितम्)

**विषयः।** अत्र प्रथमं भक्तिस्वरूपनिरूपणम् । ततः श्रीरामोपासनाप्रकरणम् । सविशेष-ब्रह्मनिरूपणम् । अद्वैतनिरूपणञ्च ॥

---

**No. 25.** ऋग्वेदप्रातिशाख्यम्. By भगवान् शौनकः. Substance, country-made paper, 8×3 inches. Folia, 51. Lines, 7 on a page. Extent, 710 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares. city, Paṇḍita Vāmanācāryya Çāstrī. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । हरिः ॐ ।
परापरे ब्रह्मणि यं स्वदाऽवेदात्मानं वेदनिधिं मुनीन्द्राः ।
तं पद्मगर्भं परमं त्वादिदेवं प्रणम्यर्चां लक्षणमाह शौनकः ॥
माण्डूकेयः संहितां वायुमाह तथाकाशं चास्य माण्ड्य एव ?
समानतामनिलाम्बरे च मत्वागस्त्यो विपरिहारं तदाह ॥ इत्यादि ।

**End.** अघोष ऊष्मणो घोषात् स्पर्शोऽन्तःस्थाच घोषिणः ।
अपूर्व्व ऊष्मासंयुक्तो मकारो ह्यानिहाविन्तनाम् ॥ (?)
यकारश्च वकारश्च येतूषमाणूष्मणि्वता ॥ (?)

**Colophon.** इति भगवत् शौनकप्रणीत ऋग्वेदप्रातिशाख्यं समाप्तम् ॥ * ॥

**विषयः।** वर्णानामुच्चारणस्थाननिरूपणम् । उदात्तादिस्वरभेदेनोच्चारणनिरूपणम् । तेषां गुरुलघुत्वादिकथनम् । ऋग्वेदोक्तप्रयोगविध्यादिकथनञ्च ॥

---

**No. 26.** एवकारविचारः. Substance, country-made paper, 14×2½ inches. Folia, 6. Lines, 8 on a page. Extent, 185 çlokas. Character, Bengali. Date, Sk. 1601. Place of deposit, District Ḍhākā, Dhānakoḍā Paṇḍita Pitāmbara Bhaṭṭāçāryya, Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय । एवकारस्यात्यन्तायोगायोगान्ययोगव्यवच्छेदोऽर्थः । इत्यादि ।

End. न तु तद्विशिष्टान्यत्वपदसम्बन्धावच्छिन्नाधिकरणतासम्बन्धेन इति न काप्यनुपपत्तिरिति ॥

Colophon. इति एवकारविचारः समाप्तः ॥ श्रीहरिः ।
इन्दुबिन्दुरसेन्द्वब्दे शुचौ भार्गववासरे ।
स्वार्थं श्रीकृष्णदेवो हि व्यलिखत् पुस्तकं त्विदम् ॥

विषयः । एवकारस्य विचारमुखेन व्याख्यानम् ।

---

No. 27. कतिपयकारकव्याख्यानम्. By विद्यासागरः. Substance, country-made paper, 17 × 4 inches. Folia, 57. Lines, 9 on a page. Extent, 3,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Medinīmaṇḍala, Paṇḍita Vāmanadāsa Vidyāratna. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय । समासघटकपदोपस्थाप्येन समासाघटकपदार्थस्य मान्वयः । आकाङ्क्षाविरहात् । इत्यादि ।

End. प्रकृतविभक्तेरपादानाश्रितत्वाभावेनान्वयचित्तस्वीयज्ञानस्यैवोचितत्वात् ननु देवदत्तसंपदादि । ... ... ... ... ... ... ... ... ... ... ... ... ... ...

Colophon. इति श्रीविद्यासागरकृतायां दुर्गटीकावृत्तौ कतिपयकारकव्याख्यानं सम्पूर्णम् ॥

विषयः । दुर्गसिंहकृतवृत्तेः कारकपादस्य व्याख्यानम् ।

---

No. 28. कविप्रिया. By वामनमिश्रः. Substance, country-made paper, 12 × 3 inches. Folia, 52. Lines, 6 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, ? Place of deposit, Kājoḍā grāma, Post Office Aṇḍāl, Akhilanātha Nāyek. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमो गणेशाय ।
प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया ।
काव्यालङ्कारसूत्राणां तेषां वृत्तिर्विधीयते ॥
काव्यं ग्राह्यमलङ्कारात् । काव्यं खलु ग्राह्यमुपादेयं भवत्यलङ्कारात् । काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्त्तते । इत्यादि ।

**End.** कृथेन नागेन्द्रमिवेन्द्रवाहनमित्यत्र इन्द्रवाहनशब्दे वाहनमात्रिताद्रिति धत्वं न भवति स्वस्वामिभावं विवक्षितं तेनेन्द्रवाहनमिति ।
सदसन्तो मया शब्दा विविच्याल्पेन दर्शिताः ।
अनयैव दिशा कार्यं शेषाणामप्यवेक्षणम् ॥

**Colophon.** इति वामनमिश्रविरचिता कविप्रिया समाप्ता ॥ ० ॥

**विषयः ।** प्रथमाधिकरणे,— १ माध्याये प्रयोजनस्थाननिरूपणम् । २ याध्याये अधिकारिचिन्तारीतिनिरूपणम् । ३ याध्याये काव्यशरीरादिनिरूपणञ्च । द्वितीयाधिकरणे,— १ माध्याये दोषनिरूपणम् । २ याध्याये वाक्यार्थदोषदर्शनञ्च । तृतीयाधिकरणे,— गुणादिविवेचनम् । चतुर्थाधिकरणे,— १ माध्याये शब्दालङ्कारविचारः । २ याध्याये उपमाविचारः । ततः अलङ्कारविवेचनञ्च । पञ्चमाधिकरणे,— १ माध्याये प्रयोगादिनिरूपणम् । २ याध्याये शब्दशुद्ध्यादिनिरूपणञ्चेति ॥

---

**No. 29. काण्डानुक्रमणिकाविवरणम्**. Substance, country-made paper, 8 x 3 inches. Folia, 11. Lines, 12 on a page. Extent, 258 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । अथ काण्डानुक्रमो विस्तरतो व्याख्यायते अथ काण्डानुक्रम इत्यादि काण्डशेषान् यथा काण्डं विदध्यात् विचक्षण इति वचनात् काण्डशेषसंज्ञानि पुरोडाशीयादीनि क्रमेण निर्दिश्यन्ते ॥ इत्यादि ।

**End.** यः वेदवित् यजुर्वेदं पठन् एतान् उक्तान् ऋषीन् वेद जानाति सः ऋषीणां सायुज्यं ब्रह्मणः सालोक्यं एति प्राप्नोति इत्यर्थः ॥

**Colophon.** इति काण्डानुक्रमणिकाविवरणे चतुर्थोऽध्यायः ॥ * ॥

**विषयः ।** काण्डानुक्रमणिकाव्याख्या ।

---

**No. 30. कातन्त्रपरिशिष्टटीका**. By **गोविन्दपण्डितः**. Substance, palm-leaf, 13 x 1 inches. Folia, 94. Lines, 3 on a page. Extent, 1,150 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Āḍāihāzār, Paṇḍita Candrakānta Vidyālaṅkāra. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।

शिष्टाचारपरिप्राप्तं प्रारब्धविघ्ननाशकम् हरिनमस्कारं कुर्व्वन् शिष्यशिक्षार्थ-मादौ निबध्नाति संसारेति । अस्यार्थः हरिं नत्वा कातन्त्रपरिशिष्टं ब्रूमः ॥ परिशिष्टं यदुक्तादिसुपचारात्तत्तद्विधायकं सूत्रमिति यथा कृतिना न कृताः कृत इति लक्षणे न कृतमित्यर्थः । संसारतिमिरमिहिरमिति विशेषणेन नमस्कारोपयुक्तत्वं दर्शितम् । नमस्यत्वं प्रतिपादयति महेशमिति तथाच सर्व्वनियोजकत्वमिति संसारोत्कृष्टत्वेन नमस्यत्वमिति । इत्यादि ।

**End.** तच्छब्देन प्रकृतं कर्म्म उच्यते तस्य प्रत्ययस्तत्प्रत्ययः अपगतमिति न विद्यते संज्ञा यस्येति विग्रहः । ननु कथमेतदुपपन्नं मासादीनामपि कालादि-संज्ञायाः सत्त्वात् नैवमित्याह अपादानादिसंज्ञानामविषय इति प्रस्तुतत्वादिति भावः कालादिशब्देन कियन्तोऽभिधीयन्ते इति विशिष्टप्रतिपत्तिनिवृत्तये श्लोकेन कालादिकं प्रतिपादयति कालस्येति कालस्य कालशब्दवाच्यस्येत्यर्थः कालभेदानां मासपक्षादीनां अध्वमानस्य क्रोशादेः अपादानादेरविषय इति परत्र निगदितं कथमिदानीं तद्विधायाधिकरणे दर्शितमित्याह अधिकरणविधिरयमित्यादि यत्र स्वपदेन सह कालादेः सम्बन्धत्वेनोपस्थिति-स्तत्रैवायं विधिः । ध्रौव्यस्येति किमिति राजावापानं पठतीति पाठोऽप्यत्र एव अधिकरणसंज्ञाविषयत्वेन कर्म्मत्वं सिद्धमिति दुर्गमतस्वीकारेऽप्यदोषात् तदयुक्तमित्याह इहेत्यादि कर्म्मणि विधेयः ... ... ... ... ।

**Colophon.** इति गोविन्दपण्डितविरचितकातन्त्रपरिशिष्टे सन्धिप्रकरणम् ॥

---

**No. 31. कात्यायनीतन्त्रम्.** Substance, country-made paper, 10 × 4½ inches. Folia, 18. Lines, 9 on a page. Extent, 588 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, fresh. Verse. Correct.

**Beginning.** श्री पार्व्वत्युवाच ।

हे देव जगदानन्द सृष्टिस्थित्यन्तकारक ।
त्वयोक्ताखिलतन्त्रेषु देवी कात्यायनी पुरा ॥
कात्यायनीति विख्याता सा कथं तद्वद प्रभो ॥ इत्यादि ॥

End. श्रीशिव उवाच ।

इति ते कथितं देवि संक्षेपेण तवाग्रतः ।

महादुर्गा-जगद्धात्री-विद्योत्पत्तिं सुदुर्लभाम् ॥

Colophon. इति कात्यायनीतन्त्रेऽष्टपञ्चाशत्तमः पटलः ।

विषयः । कात्यायन्युत्पत्तिकथनम् । तस्याः पूजादिकथनञ्च । महादुर्गाजगद्धात्र्युत्पत्ति-कथनम् । तस्याः पूजादिकथनञ्च ।

---

No. 32. कापिलसूत्रवृत्तिः. (संक्षिप्ता) Substance, country-made paper, 8 × 3 inches. Folia, 9. Lines, 7 on a page. Extent, 126 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

Beginning. श्रीगणेशाय नमः ।

यद्वागिवभूतिरखिलाखिलतत्त्वजाता

नानार्थतत्त्वममलं परिबोधयन्ती ।

श्रेयः करोति जगतां भगवन्तमाद्यं

तं श्रीमहर्षिकपिलं प्रभुमानतोऽस्मि ॥ इत्यादि ।

End. इत्येवं परिसूत्रयन्मतिमते मोक्षापवं कापिलम् ।

सूत्राणाममलं दिकद्वयमिदं जीयाच्चिरं चेतसि ॥

Colophon. इति संक्षिप्तसांख्यशास्त्रे कापिलसूत्रवृत्तिः समाप्ता ॥ ० ॥

विषयः । सांख्यसूत्रस्य संक्षेपेण व्याख्यानम् ।

---

No. 33. कामाख्यातीर्थविधिः. Substance, country-made paper, 14 × 2½ inches. Folia, 9. Lines, 6 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Roāil, Bābu Yogīndramohana Rāya. Appearance, tolerable. Prose and Verse. Generally correct.

Beginning. ॐ नमः कामाख्यायै । अथ कामाख्यातीर्थविधिः । तत्र पथक्रमः ।

पूर्व्वे तु धनकामः स्यात् राज्यकामस्तु पश्चिमे ।

उत्तरे मुक्तिकामस्तु ऐशान्ये रिपुनाशनम् ॥ इत्यादि ।

End. तस्याः स्मरणमात्रेण पुन इति कामाख्यासंक्षेपपूजा अथ पीठस्थानानि लिख्यन्ते ॥ ० ॥

**Colophon.** लिपिरियं भाषाढ़स्य चिंतद्वियचीया ॥ • ॥

**विषय:** । कामाख्यापूजाप्रयोगादिः ।

---

**No. 34.** कारकचक्रटीका. Substance, country-made paper, 13×3 inches. Folia, 18. Lines, 10 on a page. Extent, 950 çlokas. Character, Bengali. Date, SK. 1746. Place of deposit, District Vākuḍā, Post Office Sālatāḍā, Vākulo, Paṇḍita Caṇḍicaraṇa Caṭṭopādhyāya. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः । क्रियानिमित्तत्वमिति क्रिया धात्वर्थः तन्निमित्तं तत्प्रयोजकं ग्रामं गच्छति इत्यादौ गमधात्वर्थः । इत्यादि ।

**End.** इत्यत आह नौकापदद्वेति । ननु काष्ठलौहप्रचयरूपा नामद्वारम्भ-कारम्भ (?) इत्यत आह नौकाया इति ॥ * ॥

**Colophon.** समाप्तेयं कारकचक्रटीका । शकाब्दाः १७४६ ।

**विषय:** । कारकचक्रस्य व्याख्यानम् ।

---

**No 35.** काव्यकौमुदी. By रत्नभूषणः. Substance, country-made paper, 16×3 inches. Folia, 130. Lines, 7 on a page. Extent 3,200 çlokas. Character, Bengali. Date, SK. 1731. Place of deposit, District Barisāl Mānapāçā, Paṇḍita Govindacandra Çiromaṇi. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** नमो गणेशाय ।

विद्यात्यपूर्व्वमखिलं पुष्णाति स्वेच्छयाथ संहरति ।
शश्वज्जगज्जयिनी जयति कवेर्भारती देवी ॥
स्वरूपमिति शब्दानां तदर्थश्च निगद्यते ।
प्रागेव बालबोधार्थं ततः काव्यं निरूप्यते ॥
श्रीरत्नभूषणेनैषा तथापि च यथामति ।
विविच्य शब्दानर्थादीन् क्रियते काव्यकौमुदी ॥ इत्यादि

**End.** दोषाणामेवमन्येषामौचित्येन क्वचिद्बुधैः ।
अदोषता गुणत्वञ्चानुभयत्वञ्च गम्यताम् ॥

अनुभयत्वं दोषगुणाभाववत्त्वं ... ... ... ।
ग्रन्थेऽत्र काव्यकौमुद्यां विदन्तु सुधियः सुखम् ॥ ० ॥

**Colophon.** इति वैद्य-श्रीयुतरत्नभूषणकृतायां काव्यकौमुद्यां दोषनिर्णयो नाम दशमः परिच्छेदः । शाके सोमकृशानुशैलशशिनि लङ्के गते कार्मुके ॥ * ॥

**विषयः ।** १ म परिच्छेदे नामकाण्डम् । २ य परि० लिङ्गादिनिरूपणम् । ३ य परि० धातुप्रत्ययादिकथनम् । ४ र्थ परि० काव्यस्य प्रयोजन-कारण-स्वरूपादिनिरूपणम् । ५ म परि० ध्वनिनिर्णयः । ६ ष्ठ परि० गुणीभूतव्यङ्ग्यशब्दार्थचित्रनिर्णयः । ७ म परि० गुणविवेकः । ८ म परि० शब्दालङ्कारनिर्णयः । ९ म परि० अर्थालङ्कारविवेकः । १० म परि० दोषनिर्णयश्चेति ॥

---

**No. 36.** **काशीकल्पलतिका.** Substance, country-made paper, 16×4 inches. Folia, 20. Lines, 6 on a page. Extent, 450 çlokas. Character, Bengali. Date, ? Place of deposit, Gāḍuriā, District Barisāl, Paṇḍita Durgācaraṇa Nyāyaratna. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमः काश्यै ।
देवान्न प्रणमामि चान्न न च यत्ते मुक्तिदानक्षमाः
ज्ञानाधीनतया स्वतस्य विदुषां कीटादिकानामपि ।
तत्त्वज्ञानकरं कथं जडमतिः वन्दे न षड्दर्शनं
श्रीकाशीं प्रणमामि यान्तसमये निर्व्वाणमुक्तिप्रदा ॥ इत्यादि ।

**End.** शेषो न दृष्टः ।

**विषयः ।** काशीस्तवादिकथनं तन्माहात्म्यकथनञ्च ।

---

**No. 37.** **कुलपूजनचन्द्रिका.** By **चन्द्रशेखरशर्म्मा.** Substance country-made paper, 14×3 inches. Folia, 12. Lines, 6 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura, Vidgā, Paṇḍita Ānandacandra Vidyālaṇkāra. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
नत्वा गुरुपदद्वन्द्वं चन्द्रशेखरशर्म्मणा ।
तन्यते कौलिकप्रीत्यै कुलपूजनचन्द्रिका ॥

अन्यच केषामधिकार इति जिज्ञासायां कालीयामले भैरवं प्रति देवीवाक्यं ।
सर्व्वेषामधिकारोऽच नैव कार्य्या विचारणा ।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं न संशयः ॥ इत्यादि ।

**End.** न्युब्जीकृत्य ततः पात्रं पुष्पं तच क्षिपेद्बुधः ॥

**Colophon.** अतःपरं खण्डितम् ।

**विषयः ।** कौलिकानां पूजाविध्यादिः ।

---

**No. 38.** कृतार्थमाधवः. By राममाणिक्यकविराजः. Substance, palm-leaf, 13 × 1½ inches. Folia, 36. Lines, 3 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Mattagrāma, Bābu Amṛtānanda Kavirāja. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
स्रष्टा सृष्टिविधौ कृता निरुपमा नैपुण्यसीमेव या
सा श्रेयांसि सुलोचना दिशतु वो गोपालजानां वरा इत्यादि ।

**End.** माध । निश्वस्य । सर्व्वे गता अहमपि गम्भिन्यालये गच्छामीति निष्क्रान्तः ।

**Colophon.** इति निष्क्रान्ताः सर्व्वे । तृतीयोऽङ्कः । अतःपरं खण्डितम् ।

**विषयः ।** माधवसुलोचनोपाख्यानात्मकं नाटकम् ।

---

**No. 39.** कृत्पादविवरणम् (सारावलीयम्). By रघुवीरवन्द्योपाध्यायः. Substance, country-made paper, 15½ × 3 inches. Folia, 51. Lines, 6 on a page, Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Huglī, Khānākul, Kṛṣṇanagara, Paṇḍita Pūrṇacandra Tarkavāgīça. Appearance, old. Prose. Correct.

**Beginning.** श्रीरामः ।
अनाथनाथं रघुनाथमद्वयं चैतन्यमानन्दमनादिमादरात् ।
प्रणम्य टीका रघुवीरशर्म्मणा कृता कृतः कोविदमोदहेतये ॥
अथ नामपदसाधनमारभते तत्र प्रथमादिसप्तविभक्त्यधीनं सा च विभक्ति-
र्नामोत्तरविधेया प्रायो नाम-कृत्प्रत्ययाधीनसाधनमिति नामोत्तरविहितात्
तद्धितादपि प्राक् नामोत्पादककृत्प्रत्ययविधायकं पादमातनुते तत्र च

शब्दशासनयोर्द्दशलकारेषु पुरस्कृतकृद्धर्म्मातिदेशक्रियमयविधेयत्वाच्च तत्-सूत्रमादौ विदधाति । तद्यथा । धातोः कृत्पर्य्यन्तमधिकार इति धातोरिति व्याख्यानम् । इत्यादि ।

**End.** एवं प्रकृतिप्रत्ययागमादिभिरन्यानि साधनीयानि । तथाचोक्तमाचार्य्यैः । वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥

**Colophon.** इति श्रीरघुवीरवन्द्योपाध्यायकृतौ सारावल्यां कृतीयकृत्पादविवरणं समाप्तम् ।

**विषयः ।** नारायणकृतसारावलीव्याकरणान्तर्गतकृदन्तपादस्य व्याख्यानम् ।

---

**No. 40.** कृदन्तटीका. *By* वंशीवदनः. Substance, country-made paper, 17 × 3 inches. Folia, 29. Lines, 7 on a page. Extent, 900 çlokas. Character, Bengali. Date, Sana 1270. Place of deposit, Kājoḍā, Post Office Anḍāl, Paṇḍita Yādu Bhaṭṭācāryya. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः शिवाय ।

श्रीरामं जलदश्यामं जितकामं तनुश्रिया ।
रत्नसिंहासनासीनं ज्ञानमुद्राकरं भजे ॥
कृद् ॥ तिङ्प्रत्ययानन्तरं कृत्प्रत्ययविधानं इति तिङ्धर्म्मिप्रत्ययद्वयमाह ।
इत्यादि ।

**End.** कृत्वादिति स्वभावेत्यादि ददित्यादौ यथा तुक् तद्व्याख्यातमेव ॥
श्रीवंशीवदनं विशिष्टविनयं विद्वज्जनप्रीणनं
कृते रायमतौ सतौ मतिमतौ श्रीमान् विशिष्टः स्वः यत् । (?)
व्याकारे क्रमदीश्वरेण चरिते श्रीनन्दिना शोधिते
गोयीचन्द्रकृते तु तद्विरचिते पादस्तृतीयो गतः ॥ ० ॥

**Colophon.** इति कृदन्तटिप्पनी समाप्ता । सन १२७० साल ।

**विषयः ।** संक्षिप्तसारीयकृदन्तपादस्य व्याख्यानम् ।

---

No. 41. कृष्णकेलीनामकाव्यम्. By कृष्णमोहनः. Substance, country-made paper, 14×2 inches. Folia, 45. Lines, 4 on a page. Extent, 550 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Roāil Raghunāthapura, Paṇḍita Ramaṇīmohana Smṛtiratna. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
अनन्तब्रह्माण्डं भ्रमति यदकाण्डं तनुचर्या
विशेषस्याधारस्तृणपरिमितं नामयमत्तो ।
जगद्वन्द्यं मायागुणत इति सोऽपि प्रथमितो
प्रजौकः प्रेमाब्धेरवतु गुणगुप्तैः स निखिलम् ॥ इत्यादि ।

**End.** काण्डं नीतिमतं तथाकृतमतं स्तोकवर्णा यष्टिका
पूर्व्वं चाप्यकलोदयन्तु चतुरो इत्यादिकं संचयाम् ।

**Colophon.** इति श्रीकृष्णमोहनकृतश्रीकृष्णकेलिनामकाव्ये सप्तमः सर्गः । समाप्तश्चायं ग्रन्थः ॥ • ॥

**विषयः ।** कृष्णलीलावर्णनम् ।

---

No. 42. कृष्णाभिषेकविधिः. Substance, country-made paper, 12×3 inches. Folia, 6. Lines, 7 on a page. Extent, 110 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Post Office Caukidāṅgā, Nandigrāma, Rājapura, Paṇḍita Aṭalavihāri Bhaṭṭācāryya. Appearance, old. Prose. Generally incorrect.

**Beginning.** ॐ श्रीदुर्गा । अथ कृष्णाभिषेकविधिः । स्नातः शुचिः कृतनित्यक्रियः कुशहस्तासाम्न आसनशुद्ध्यादिकं विधाय । इत्यादि ।

**End.** इति पुरुषसूक्तेन मन्त्रेण षोड़शकलसस्नानम् । ततस्त्वं परिधाप्य स्वस्थानानीय षोड़शोपचारैः पञ्चोपचारैर्वा पूजयेत् ।

**Colophon.** इति कृष्णाभिषेकविधिः ॥ * ॥

**विषयः ।** श्रीकृष्णस्याभिषेकविधिस्तत्प्रयोगादिश्च ।

---

**No 43.** कौलगजमर्दनम्. By श्रीकृष्णानन्दाचलः. Substance, country-made paper, 11 x 5 inches. Folia, 29. Lines, 9 on a page. Extent, 600 çlokas. Character, Nāgara. Date, SM. 1941. Place of deposit, Hātuā Mahārājā's Library. Appearance, new. Verse. Correct.

**Beginning.** गणपतये नमः ।

नत्वा श्रीगणनाथपादकमलं प्रत्यूहकक्षानलं
मार्त्तण्डं भव मे स्वपादयुगलं देव्यङ्घ्रिपद्माचलम् । (?)
लब्धं यत्पदसेवनेन सकलं वेदान्तवाचां फलं
तं कैलासपदादिसज्जनचलं संस्मृत्य लब्ध्वा बलम् ॥
विप्राणां रक्षणार्थाय विदुषां तोषहेतवे ।
स्मृत्यागमादिभिः कुर्व्वे दुष्कौलगजमर्द्दनम् ॥ इत्यादि ।

**End.** येषां बुद्धिस्तु नो धर्म्मे यथेष्टं सञ्चरन्ति ते ।
यथेष्टाचारतस्तेषां नो हरिर्न च वै गतिः ॥
रन्ध्रचन्द्राङ्कचन्द्रेऽब्दे भोगाढ्ये विक्रमाङ्कते ।
आषाढासितपञ्चम्यां काशिकायामिदं कृतम् ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमत्कैलासाचलयतिवर्य्यशिष्य-श्री-कृष्णानन्दाचलनिर्मितं कौलगजमर्द्दनं समाप्तम् । सम्वत् १९४१ ।

**विषयः ।** तान्त्रिकसम्प्रदायमतविरुद्धमतस्थापनम् ।

---

**No. 44.** क्त्वावादः. Substance, country-made paper, 18 x 4 inches. Folia, 2. Lines, 8 on a page. Extent, 64 çlokas. Character, Bengali. Date, ? Place of deposit, District Barisāl, Gāḍuriā, Paṇḍita Durgā-čaraṇa Nyāyaratna. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।
क्त्वाप्रत्ययस्य लाघवात् प्रागभावे शक्तिः ॥ इत्यादि ।

**End.** असङ्कोचेनैवोपपत्तौ सङ्कोचस्यान्याय्यत्वात् इति समासः ॥

**Colophon.** इति क्त्वावादः समाप्तः ॥

**विषयः ।** क्त्वाप्रत्ययस्य विचारः ।

---

**No. 45.** क्रमकौमुदी. By धनञ्जयः. Substance, palm-leaf, 14 × 1½ inches. Folia, 29. Lines, 3 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Rājasāhī, Baidyabelghariyā, Bābu Çaçibhūṣaṇa Cakravarttī. Appearance, old. Verse. Incorrect.

**Beginning.** नमः शिवाय ।
विबुधमुनिफणीन्द्रश्रीदसीमन्तिनीना-
सुरभि सुभगसम्पन्ने पद्मायोषितानाम् ।
गलविलसदहीन्द्रस्फुल्लतैराद्रवेधः
शिवमवतु पुरारेः प्रच्छदच्छन्नमूर्त्तेः ॥
... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ...
व्युत्पित्सोः क्रमकौमुदीं प्रतिपदव्याख्योज्ज्वलां सुख-
प्रज्ञप्त्यै च धनञ्जयः प्रतनुते सन्तोऽनुगृह्णन्त्विमाम् ॥
येऽन्नाद्यो धातुसम्बन्धास्तेऽनुबन्धाः प्रकीर्त्तिताः ।
क्वाप्यवर्णः प्रयुक्तोऽत्र सुखोच्चारणसिद्धये ।
भू सत्तायां तयोत्पत्तौ चितौ संज्ञानके तथा ॥ इत्यादि ।

**End.** भूसुराद्योर्निविष्टाः स्युर्येऽन्येऽनुक्तास्तु धातवः ।
तयोर्व्युत्करणाभावादसमाप्तसमुच्चये ॥

**Colophon.** नानामतानुबन्धेयं धनञ्जयविनिर्म्मिता ।
(?) शरात्मा १०० शाकेषु समाप्ता क्रियाकौमुदी ॥ ० ॥ श्रीचरणे नमः ॥

**विषयः ।** भ्वाद्यदाद्यादिधात्वर्थानां निरूपणम् ।

---

**No. 46.** गङ्गालहरीटीका. By सदाशिवभट्टः. Substance, country-made paper, 12 × 5 inches. Folia, 20. Lines, 16 on a page. Extent, 912 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । ॐ नमो गङ्गादेव्यै ॥
पितुः स्कन्धे स्थित्वा विमलमुकुरालोकनधिया
हिमांशुं व्याकर्षन्नखिलभयविद्रूनेन मनसा ।

विधुं हित्वा वह्निं सरसमविसृष्टा गिरिभुवा
प्रभं भीतो भीतो हिशतु बक वः शम्भुतनयः ॥ इत्यादि ।

End. इमां पीयूषलहरीं जगन्नाथेन निर्म्मिताम् ।
यः पठेत् तस्य सर्व्वत्र जायन्ते सर्व्वसम्पदः ॥
लकाव्यपठनफलमाह 'इमामिति पीयूषस्य अमृतस्य लहरीं त्वां यथा इत्यादि ॥

Colophon. शाके कौलकसंज्ञके वसुखके सम्पासके चैनके
वारे भार्गवके तिथौ करचके सर्पस्य सम्पाखके ।
मूले भे विबुधौघचिन्तसुखदा टीका समाप्ता मरा-
न्तेषां पातु समस्तपापहरणी गङ्गा महेशाङ्गना ॥
नारायणो यस्य पितामहोऽभूत्माणीकभट्टस्य पिता यदीयः ।
गोपी यदीया जननी सुशीला टीका कृता तेन सदाशिवेन ॥
इति सदाशिवविरचिता जगन्नाथनिर्म्मितगङ्गालहर्य्या व्याख्या समाप्ता ॥

विषय: । गङ्गालहरीनामकस्य जगन्नाथकृतस्य स्तोत्रस्य व्याख्या ।

---

**No. 47.** गणपाठः. By भरतसेनः. Substance, country-made paper, 10 × $3\frac{1}{2}$ inches. Folia, 17. Lines, 7 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna Dhātrigrāma, Paṇḍita Ṣaṣṭhidāsa Bhaṭṭācāryya. Appearance, tolerable. Verse. Generally correct.

Beginning. श्रीहरिः शरणं ।
आरब्धा तन्वकाम्सः सम्पद्लीनोऽपि सम्पदाम्भाता ।
पीतविषो जितमृत्युर्विषमचरित्रो हरो जयति ॥
समेतः कतिचिद्धातून् टष्टीतामादिना तथा ।
नत्वादैस्य सुपद्येन ब्रवीति भरतो भिषक् ॥ इत्यादि ।

End. देवता बन्दे देवं बन्दे देवता भक्तिरस्तु देवे भक्तिरस्तु ॥ देवादिः ॥

Colophon. इति वैद्य-हरिहरखानवंशसम्भूत-गौराङ्गमल्लिकात्मज-श्रीभरतसेनकृतगण-पाठः समाप्तः ॥ * ॥

विषय: । मुग्धबोधमतेन धात्वर्थादिनिरूपणम् ।

---

**No. 48.** **गणेशपञ्चाङ्गम्.** Substance, country-made paper, 7×4 inches. Folia, 85. Lines, 5 on a page. Extent, 400 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārajā's Library, Hātuā. Appearance, new. Verse. Correct.

**Beginning.** ॐ श्रीगणेशाय नमः ।

ॐ श्रीभैरव उवाच । (?) देव्युवाच ।

ॐ भगवन् भूतभव्येश कुलधर्मप्रकाशक ।

कुलेश श्रोतुमिच्छामि मन्त्रस्यास्योत्तरार्द्धकम् ॥

श्रीभैरव उवाच ।

अधुना देवि कौलेशि कौलिकानां हितेच्छया ।

मन्त्रोत्तरार्द्धं वक्ष्यामि ... ... ... ... ... ॥

गणेशस्य च पञ्चाङ्गं ... ... ... ... ... ।

... ... ... ... ... ... ... ... ... ॥

देवि वक्ष्ये रहस्यं ते प्रश्नोत्तरमिमं महत् ।

अवक्तव्यमभक्तेभ्यो भक्तेभ्यो मुक्तिसाधनम् ॥ इत्यादि ।

**End.** पञ्चाङ्गञ्च गणेशस्य रहस्यं मम पार्वति ।

विना शिष्याय नो दद्यात् साधकाय विना तथा ॥

पटलं पद्धति ... ... ... मन्त्रनामसहस्रकम् ।

स्तोत्रं पञ्चाङ्गमित्युक्तं गोपनीयं स्वयोनिवत् ॥

**Colophon.** इति श्रीदेवीरहस्ये महागणपतिस्तोत्राख्यानं नाम शताधिकत्रिंशः पटलः ।

**विषयः ।** श्रीमहागणपतेर्देवीरहस्यान्तर्गत-पूजापद्धति-सहस्रनाम-कवच-स्तोत्रात्मकपञ्चाङ्गस्य कथनम् ॥

---

**No. 49.** **गयामाहात्म्यम्. (वायुपुराणीयम्).** Substance, country-made paper, 11×6 inches. Folia, 25. Lines, 12 on a page. Extent, 500 çlokas. Character, Nāgara. Date, Sm. 1932. Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

सूत उवाच ।

सनकाद्यैर्महाभागैर्देवर्षिः सह नारदः ।

सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्वकम् ॥

नारद उवाच ।

सनत्कुमार मे ब्रूहि तीर्थं तीर्थोत्तमोत्तमम् ।

तारकं सर्व्वभूतानां पठतां शृण्वतां सदा ॥

सनत्कुमार उवाच ।

वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्व्वतारकम् ।

गयातीर्थं सर्व्वदेशे तीर्थेभ्योऽप्यधिकं शृणु ॥ इत्यादि ।

End. उपाख्यानमिदं पुण्यं गृहे तिष्ठति पुस्तकम् ।

सर्पाग्निचौरजनितं भयं तत्र न विद्यते ॥

पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।

तस्य गेहे स्थिरा लक्ष्मीः सुप्रसन्ना भविष्यति ॥

सूत उवाच ।

सनत्कुमारो मुनिपुङ्गवाय

पुण्यां कथां तत्र निवेद्य भक्त्या ।

स्वमाश्रमं पुण्यवनैरुपेतं

विसृज्य सद्गीतगुरुं जगाम ॥

Colophon. इति श्रीवायुपुराणे श्वेतवराहकल्पे गयामाहात्म्येऽष्टमोऽध्यायः । श्रीरामो-जयतितरां । सम्वत् १९१२ चैत्र कृष्ण अमावास्यायामिदं पुस्तकं सम्पूर्णम् ॥

विषयः । वायुपुराणान्तर्गतम् गयातीर्थस्य माहात्म्यम् ।

---

**No. 50. गर्गसंहिता.** Substance, country-made paper, 13 × 6 inches. Folia, 302. Lines, 11 on a page. Extent, 5,600 çlokas. Character, Nāgara. Date, Sm. 1931. Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

ॐ नमो भगवते तुभ्यं वासुदेवाय साक्षिणे ।

प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥

श्रीगर्ग उवाच ।

इत्थं श्रीकृष्णचरितं मया ते कथितं शुभे ।

चतुःपदार्थदं नृणां किं भूयः श्रोतुमिच्छसि ॥

श्रीशौनक उवाच ।
बहुलाश्वो मैथिलेन्द्रः श्रीकृष्णोऽत्र हरिप्रियः ।
किं पप्रच्छार्थं देवर्षिं तन्मे ब्रूहि तपोधन ॥ इत्यादि ।

End. नवसर्गविसर्गाढ्यां स्वर्गभृद्गर्गसंहितां ।
चतुर्वर्गप्रदां मुक्ता गर्गो गर्गाचलं ययौ ॥
शरद्विकचपङ्कजश्रियमतीव विद्वेषक-
मलिन्द्रमुनिसेवितं कुलिशकञ्जचिह्नाश्रितम् ।
स्फुरत्कनकनूपुरं दलितभक्ततापत्रयं
चलद्द्युतिपदद्वयं हृदि दधामि राधापतेः ॥

Colophon. इति श्रीमद्गर्गाचार्य्यसंहितायां विज्ञानखण्डे नारदबहुलाश्वसंवादे ब्रह्म-निरूपणं नाम दशमोऽध्यायः ॥ संवत् १९३१ ॥ ... ... ... ... ... ...

**विषयः ।** अत्र नवखण्डाः सन्ति । आदौ विश्वजित्खण्डस्तत्र श्रीमद्गर्गाचार्य्यसंहितायां विश्वजित्खण्डे नारदबहुलाश्वसंवादे मरुतोपाख्यानं नाम १ अध्यायः । २ ग० सं० वि० ख० ना० ब० संवादे प्रद्युम्नविजयाभिषेको नाम २ अः । ३ ग० सं० वि० खण्डे यादवसैन्यनिर्गमनं नाम ३ अः । ४ ग० सं० वि० खण्डे प्रद्युम्नदिग्विजयार्थगमनं नाम ४ अः । ५ ग० सं० वि० ख० ना० ब० संवादे कलिङ्गदेशविजयो नाम ५ अः । ६ ग० सं० वि० ख० ना० ब० संवादे मरुधन्वमालवमाहिष्मतीदेशविजयो नाम ६ अः । ७ ग० सं० वि० ख० ना० ब० सं० गुर्ज्ज-राढविजयचेदिदेशगमनं नाम ७ अः । ८ ग० सं० वि० खण्डे ना० ब० सं० धुमच्छन्नवधो नाम ८ अः । ९ ग० सं० वि० खण्डे ना० ब० संवादे रङ्गपिङ्गवधे शिशुपालयुद्धे चेदिदेश-विजयो नाम ९ अः । १० ग० सं० वि० खण्डे ना० ब० संवादे कौंकण कुटक विगर्त्त केरल-तैलङ्ग-महाराष्ट्र-कर्णाटविजयकारूषदेशगमनं नाम १० अः । ११ ग० सं० वि० खण्डे ना० ब० सं० दन्तवक्त्रयुद्धे करूषदेशविजयो नाम ११ अः । १२ ग० सं० वि० खण्डे ना० ब० सं० उशीनर-विदर्भ-कुन्ति-दरददेशविजयेऽगस्त्यकार्ष्णिशाम्बप्रस्तावो नाम १२ अः । १३ ग० सं० वि० खण्डे ना० ब० सं० शाल्वमल्लारलङ्काविजयो नाम १३ अः । १४ ग० सं० वि० वेङ्कटाद्रिद्राविडदेशविजयो नाम १४ अः । १५ ग० सं० वि० ख० ना० ब० सं० उड्डीशकामरवङ्गसीमाधीशकामरूपकैकेयविजयो नाम १५ अः । १६ ग० सं० वि० ख० ना० ब० संवादे १७ अः । १८ ग० सं० वि० ख० ना० काशी-कोशलोत्तरनरपालनैमिषकारूषपञ्चालकान्यकुब्जकापिलविन्दुनिषधभद्रमथुरसेनदेशविजयो नाम १८ अः । १९ ग० सं० वि० ख० ना० ब० सं० कुरुदेशगमने यदुकौरवोपाख्यानं नामैकोनविंशो-ऽध्यायः । २० ग० सं० वि० ख० ना० ब० सं० कौरवयुद्धवर्णनं नाम २० अः । २१ ग० सं० वि० ख० ना० ब० सं० यादवकुरुविमर्षे २१ अः । २२ ग० सं० वि० ख० ना० ब० सं० इन्द्रप्रस्थनिगमे-

वैराटकुरुजाङ्गलकौशाम्बम्लेच्छगौराङ्गविजये भरतखण्डदिग्विजयो नाम २२ अः। २३ ग० सं० वि० ना० ब० सं० करवीरदेशविजयपञ्चदेशप्रयाणं २३ अः। २४ ग० सं० वि० ना० ब० सं० यदुपक्षे युद्धे (गज) युद्धवर्णनं नाम २४ अः। २५ ग० सं० वि० ख० ना० ब० सं० यक्षदेशप्राग्ज्योतिषपुरविजये २५ अः। २६ ग० सं० वि० ख० ना० ब० सं० रङ्कवल्लीचीनदेशविजये किम्पुरुषखण्डविजये २६ अः। २७ ग० सं० वि० ख० ना० ब० सं० दशार्णदेशविजये हरिवर्षखण्डविजयो नाम २७ अः। २८ ग० सं० वि० ना० ब० सं० उत्तरखण्डविजयो नाम २८ अः। २९ ग० सं० वि० ना० ब० सं० मकरडिण्डिमसिंहलद्वीपदेशत्रिपुटङ्गविजये हिरण्मयखण्डविजये २९ अः। ३० ग० सं० वि० ना० ब० सं० कलङ्कदेशमानवदेशविजये रम्यकखण्डविजये ३० अः। ३१ ग० सं० वि० ख० मन्मथदेशविजये केतुमालखण्डविजयो ३१ अः। ३२ ग० सं० वि० ख० भद्रदेशविजये भद्राश्वखण्डे चन्द्रावत्युपाख्याने वृष्टदैत्यवधो नाम ३२ अः। ३३ ग० सं० वि० ख० भद्राश्वखण्डगमने चन्द्रावत्युपाख्याने दैत्ययुद्धे भूतसन्तापनदैत्यवधो नाम ३३ अः। ३४ ग० सं० वि० ख० चन्द्रावत्युपाख्याने वृकदैत्यवधो नाम ३४ अः। ३५ ग० सं० वि० ख० कालनाभवधो नाम ३५ अः। ३६ ग० सं० वि० ख० महानाभदैत्यवधो नाम ३६ अः। ३७ गर्गाचार्य्यसंहितायां चन्द्रावत्युपाख्याने हरिश्मश्रुदैत्यवधो नाम सप्तत्रिंशोऽध्यायः, ३८ ग० सं० वि० ख० च शकुनियुद्धवर्णनं नाम ३८ अः। ३९ ग० सं० वि० ख० कृष्णागमनं नाम ३९ अः। ४० ग० सं० वि० चन्द्रावतीयुद्धोपाख्याने गरुडागमनं नाम ४० अः। ४१ ग० सं० वि० ख० युद्धोपाख्याने शकुनिदैत्यवधो नाम ४१ अः। ४२ ग० सं० वि० ख० यु० शकुनिवधोनाम भद्राश्वखण्डविजयो ४२ अः। ४३ ग० सं० वि० ख० इलावृतखण्डगमने सुतपोदेशविजये वेदनगरवर्णनं नाम ४३ अः। ४४ ग० सं० वि० इलावृतखण्डगमने वेदादिस्तुतिवर्णनं नाम ४४ अः। ४५ ग० सं० वि० इला० रागकृत श्रीकृष्णाभ्यर्थनवर्णनं नाम ४५ अः। ४६ ग० सं० वि० इला० गन्धर्वदेशविजये वसन्तमालतीवर्णनं नाम ४६ अः। ४७ ग० सं० वि० इला० देवदेशविजये शक्रसहयुद्धं नाम ४७ अः। ४८ ग० सं० वि० इलावृतखण्डविजये प्रद्युम्नद्वारागमनं नाम ४८ अः। ४९ ग० सं० वि० यज्ञारम्भे स्वजननिमन्त्रणं नाम ४९ अः। ५० गर्गाचार्य्यसंहितायां विश्वजित्खण्डे नारदबहुलाश्वसंवादे उग्रसेनमहोदये राजसूययज्ञोत्सववर्णनं नाम पञ्चाशत्तमोऽध्यायः॥ समाप्तश्चायं विश्वजित्खण्डः ॥ ० ॥ द्वितीयो गोलोकखण्डस्तत्र। १ गर्गाचार्य्यसंहितायां गोलोकखण्डे जनकनारदसंवादे श्रीकृष्णमाहात्म्यवर्णनं नाम १ अध्यायः। २ ग० सं० गो० ख० वैदेहनारदसं गोलोकवर्णनं नाम २ अः। ३ ग० सं० गो० ख० नारदबहुलाश्वसंवादे आगमोद्योगवर्णनं नाम ३ अः। ४ ग० सं० गो० ख० ना० ब० सं० उद्योगप्रश्नवर्णनं नाम ४ अः। ५ ग० सं० गो० ना० ब० सं० भगवद्ब्रह्मसंवादे भगवदागमोद्योगवर्णनं नाम ५ अः। ६ ग० सं० गो० ख० ना० ब० सं० कंसबलवर्णनं नाम ६ अः। ७ ग० सं० गो० ना० ब० सं० कंसदिग्विजयवर्णनं नाम ७ अः। ८ ग० सं० गो० ख० ना० ब० सं० श्रीराधाजन्मवर्णनं नाम ८ अः। ९ ग० सं० गो० ख० ना० ब० सं० वसुदेवविवाह-

वर्णनं नाम ९ अः । १० ग० सं० गो० ख० ना० ब० सं० बलभद्रजन्मवर्णनं नाम १० अः ।
११ ग० सं० गो० ख० ना० ब० सं० श्रीकृष्णचन्द्रजन्मवर्णनं नाम ११ अः । १२ ग० सं० गो० ख०
ना० ब० सं० नन्दमहोत्सववर्णनं नाम १२ अः । १३ ग० सं० गो० ख० ना० ब० सं० पूतना-
मोक्षो नाम १३ अः । १४ ग० सं० गो० ख० ना० ब० संवादे शकटासुरतृणावर्त्तमोक्षवर्णनं नाम
१४ अः । १५ ग० सं० गो० ख० ना० ब० सं० विश्वदर्शन नन्दप्रभाव-श्रीकृष्णनामकरणं नाम
१५ अः । १६ ग० सं० गो० ख० ना० ब० सं० श्रीराधाविवाहवर्णनं नाम १६ अः । १७ ग०
सं० गो० ख० ना० ब० सं० श्रीकृष्णबालचरित्रे दधिस्तेयवर्णनं नाम १७ अः । १८ ग० सं० गो०
ख० ना० ब० सं० यशोदाब्रह्माण्डदर्शनं नाम १८ अः । १९ ग० सं० गो० ख० ना० ब० सं०
यमलार्जुनभङ्गो नाम १९ अः । २० ग० सं० गो० ख० ना० ब० सं० भगवद्देहवर्णने दुर्व्वा-
ससो मायादर्शने नन्दनन्दनस्तोत्रवर्णनं नाम २० अध्यायः ॥ समाप्तश्चायं गोलोकखण्डः ॥०॥
तृतीयो वृन्दावनखण्डस्तत्र । १ श्रीगर्गाचार्य्यसंहितायां श्रीवृन्दावनखण्डे श्रीनन्दसुनन्दसंवादे
वृन्दावनोद्योगवर्णनं नाम १ अः । २ ग० सं० वृ० ख० गिरिराजोत्पत्तिकथनं नाम २ अः ।
३ ग० सं० वृ० ख० नन्दसुनन्दसंवादे कालिन्द्यागमनवर्णनं नाम ३ अः । ४ ग० सं० वृ० ख०
नारदबहुलाश्वसंवादे वत्सासुरमोक्षो नाम ४ अः । ५ ग० सं० वृ० ख० ना० ब० सं० बकासुर-
मोक्षो नाम ५ अः । ६ ग० सं० वृ० ख० ना० ब० सं० अघासुरमोक्षो नाम ६ अः । ७ ग०
सं० वृ० ख० श्रीकृष्णगोचारणवर्णनं नाम ७ अः । ८ ग० सं० वृ० ख० ना० ब० सं० धेनुकासुर-
मोक्षो नाम ८ अः । ९ ग० सं० वृ० ख० कालियदमनदावाग्निपानं नाम ९ अः । १० ग० सं०
वृ० ख० ना० ब० सं० शेषोपाख्यानवर्णनं नाम १० अः । ११ ग० सं० वृ० ख० ना० ब० सं०
कालियोपाख्यानवर्णनं नाम ११ अः । १२ ग० सं० वृ० ख० ना० ब० सं० राधाकृष्णप्रेमप्रकाश-
वर्णनं नाम १२ अः । १३ ग० सं० वृ० ख० ना० ब० सं० तुलसीमाहात्म्य-तुलसीपूजनं नाम
१३ अः । १४ ग० सं० वृ० ख० ना० ब० सं० प्रीतिपरीक्षणं नाम १४ अः । १५ ग० सं० वृ०
ख० ना० ब० सं० कृष्णादर्शनं नाम १५ अः । १६ ग० सं० वृ० ख० ना० ब० सं० रासक्रीडायां
वृन्दावनविहारो नाम १६ अः । १७ ग० सं० वृ० ख० ना० ब० सं० रासक्रीडायां गोवर्द्धनबाहु
लता-कुमुद्वन (?) मधुवनविहारो नाम १७ अः । १८ ग० सं० वृ० ख० ना० ब० सं० रा० क्री०
कामवन-कोकिलवनविहारे तालक्रीडावर्णनं नाम १८ अः । १९ ग० सं० वृ० ख० ना० ब० सं०
रा० क्री० शेषशायिलता-भाण्डीरवनविहारो नाम १९ अः । २० ग० सं० वृ० ख० ना० ब० सं०
रा० क्री० लोहजङ्गमहावनविहारे शङ्खचूडवधो नाम २० अः । २१ ग० सं० वृ० ख० ना० ब०
सं० रा० क्री० वृन्दावनविहारे शिवासुर्य्युपाख्यानं नाम २१ अः । २२ ग० सं० वृ० ख० ना० ब० सं०
रा० क्री० वृन्दावनविहारे शिवासुरिसुनिवरप्राप्तिर्नाम २२ अः । २३ ग० सं० वृ० ख० ना० ब० सं०
शङ्खचूडवधोपाख्याने विरजानदीसमुद्रोत्पत्ति श्रीदामशापप्रस्तावो नाम २३ अध्यायः । समाप्तश्चायं
वृन्दावनखण्डः ॥०॥ चतुर्थो गिरिराजखण्डस्तत्र । १ गर्गाचार्य्यसंहितायां गिरिराजखण्डे नारद-

रत्नदेवतकाचक्षमाहात्म्यं नाम १४ अः । १५ ग० द्वा० कपिलकुम्भकूपगोपीभूमिमाहात्म्यं नाम १५ अः । १६ ग० द्वा० सिद्धाश्रममाहात्म्ये राधादर्शनं नाम १६ अः । १७ ग० द्वा० सिद्धाश्रम-राधाकृष्णसमागमे राधाप्रेमप्रकाशः १७ अः । १८ ग० द्वा० सिद्धाश्रममाहात्म्ये १८ अः । १९ ग० द्वा० प्रथमसर्गे लीलासरोवर-हरिमन्दिर-ज्ञानतीर्थ-कृष्णकुण्ड-बलभद्रसरोवर-गणेशतीर्थ-दानखल-मायातीर्थमाहात्म्यं नाम १९ अः । २० ग० द्वा० द्वितीयसर्गे इन्द्रतीर्थ-सूर्य्यकुण्ड-ब्रह्मतीर्थ-नील-लोहित-सप्तसमुद्रकमाहात्म्यं नाम २० अः । २१ श्रीगर्गाचार्य्यसंहितायां श्रीद्वारकाखण्डे तृतीय-सर्गे पिण्डारकमाहात्म्ये यात्रामाहात्म्ये २१ अध्यायः ॥ समाप्तश्चायं द्वारकाखण्डः ॥ ० ॥ नवमो विज्ञानखण्डस्तत्र । १ इति श्रीगर्गाचार्य्यसंहितायां विज्ञानखण्डे व्यासागमनं नाम १ अध्यायः ॥ २ ग० वि० व्यासोग्रसेनसंवादे लोकगतिनिरूपणं नाम २ अः । ३ ग० वि० व्या० सं० निर्गुणभक्ति-वर्णनं नाम ३ अः । ४ ग० वि० व्या० सं० भक्तमाहात्म्यं नाम ४ अः । ५ ग० वि० व्या० सं० भक्त्युत्कर्षवर्णनं नाम ५ अः । ६ ग० वि० व्या० सं० मन्दिरप्रतिष्ठावर्णनं नाम ६ अः । ७ ग० वि० खण्डे ८ अः । ९ ग० वि० व्या० सम्वादे ९ अः । १० इति गर्गाचार्य्यसंहितायां विज्ञानखण्डे नारदबहुलाश्वसंवादे भक्तिनिरूपणं नाम १० अध्यायः ॥ समाप्तश्चायं विज्ञानखण्डः ॥ ० ॥

---

**No. 51.** गायत्रीपञ्चाङ्गम्. Substance, country-made paper, 7×4 inches. Folia, 136. Lines, 5 on a page. Extent, 510 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

नमस्कृत्य भगवान् याज्ञवल्क्यः स्वयम्भुवम् ।

परिपृच्छति+ब्रूहि ब्रह्मन् गायत्र्या उत्पत्तिं श्रोतुमिच्छामि ब्रह्मज्ञानोत्पत्तिं

प्रकृतिं परिपृच्छामि ॥ इत्यादि ।

**End.** विश्वामित्रसमुद्भूतं हितकरं सर्व्वार्थसिद्धिप्रदं

स्तोत्राणां परमं प्रभातसमये पारायणं नित्यशः ।

वेदानां विधिवेदमन्त्रसकलं सिद्धिप्रदं सर्व्वदा

संप्राप्नोति परत्र सर्व्वसुखदं आयुष्यमारोग्यदम् ॥

**Colophon.** इति श्रीविश्वामित्रकृतो गायत्रीस्तवराजः सम्पूर्णः ।

**विषयः ।** गायत्रीहृदय—रुद्रयामल-तन्त्रोक्तगायत्रीरहस्यान्तर्गतगायत्रीनित्यपूजापद्धति-रुद्रयामलीयगायत्रीरहस्यान्तर्निहितगायत्रीसहस्रनाम-विश्वामित्रसंहितान्तर्गतगायत्रीकवच-विश्वा-मित्रकृतगायत्रीस्तवराजरूप-पञ्चाङ्गस्य कथनम् ।

---

**No 52.** गीतगोविन्दटीका. By चैतन्यदासः. Substance, country-made paper, 12 × 4½ inches. Folia, 53. Lines, 9 on a page. Extent, 1,800, çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Dāsarā, Paṇḍita Guruprasāda Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीचैतन्यकृपाशीधुकणोन्मत्तेन केनचित् ।
टीका संरच्यते गीतगोविन्दस्य समासतः ॥ इत्यादि ।

**End.** ततः श्रीकृष्णप्रार्थना । प्रत्यूहयदुत्सवान् मुग्धे यन्नौ पिता प्रीतिमवाप्यते । (?)
मद्वत् श्रीकृष्णचैतन्यः प्रीयतामत्र जल्पिते ॥

**Colophon.** इति श्रीकृष्णचैतन्यपूजक-श्रीचैतन्यदासगोस्वामिविरचितायां श्रीगीतगोविन्द-
टीकायां द्वादशसर्गविहृतिः सम्पूर्णा ॥ ० ॥

विषयः । जयदेवकविकृतस्य श्रीकृष्णलीलात्मकस्य गीतगोविन्दाख्यकाव्यस्य व्याख्यानम् ।

---

**No. 53.** गीतराघवः. By हरिशङ्करः. Substance, country-made paper, 13 × 3 inches. Folia, 17. Lines, 8 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Post Office, Aṇḍāl. Kājoḍā, Paṇḍita Kārtikacandra Bhaṭṭācāryya. Appearance, fresh. Verse. Incorrect.

**Beginning.** ॐ श्रीरामचन्द्राय नमः ।
श्रीरामचरणसरोजध्यायसन्मानधीरो (?)
दशरथटहभाजं विश्वराजं खराजम् ।
\+ + + + + +
\+ + + + + + ॥
वाग्देवताचरितचित्रितचित्तसद्मा
श्रीजानकीचरणचिन्तनचक्रवर्त्ती ।
श्रीरामचन्द्रवनवासकथासमेतं
काव्यं करोति हरिशङ्करभूमिदेवः ॥ इत्यादि ।

**End.** चमनुवनावसपरिमिथिलाकृति
रिमद्वहि विलसति चिमवति सीता ।
जितपति-कुञ्जरकरनिभवाहुक-
वल्लयित-सुतनुरतनुरणभीता ॥ (?)

द्विजवरिरङ्गरविरचितमौनक-
मिदमुदयतु चरिजनचदि सारम् ।
कलियुगमानुष-बकुविधकिल्विष-
निविडविपिनपरिच्छ्रमनकुठारम् ॥

**Colophon.** श्रीरामचन्द्राय नमः ।

**विषयः ।** नानाविधरागेषु प्रथमसर्गे रामपरिदेवनादिकथनम् । २ य सर्गे, — भरत-सम्भाषणम् । ३ य सर्गे, — पञ्चवटीदर्शनाग्रपूर्णपणखादर्शनादिः । ४ र्थ सर्गे, — खरवधरिनादि-कथनम् । ५ म सर्गे, — जानकीदर्शनम् । ६ ष्ठ सर्गे, — हनुमत्प्रेषणादिः । ७ म सर्गे, — अयोध्यागमनादिवर्णनञ्च ।

---

**No. 54.** गुणरत्नकोषः. (सटीकः) By रङ्गराजभट्टः. Substance, country-made paper, 11 × 4½ inches. Folia, 17. Lines, 18 on a page. Extent, 850 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Bhārata Rāmānuja Dāsa. Appearance, old. Prose and verse. Generally correct.

**Beginning.** मूलस्य ।

श्रिये समस्तचिदचिद्विधानव्यसनं हरेः ।
अङ्गीकारिभिरालोकैः सार्थयन्त्यै कृतोऽञ्जलिः ॥
उन्नासपक्ष्मनिपालिनलनोको-
निर्व्याजकोरकितनेमकटाक्षकोलाम्
श्रीरङ्गचम्र्यंनवमङ्गलदीपलेखां
श्रीरङ्गराजमहिषीं श्रियमाश्रयामः ॥
अनुकलननुकाण्डाखिलमारब्धमात्-
प्रतिदिनमुजमाजश्रीसखालोकवर्द्धिः ।
अनमयनगुलुच्छ्यारपुष्पद्विरेफा
रचयतु मयि लक्ष्मीः कल्पवल्लीः कटाक्षान् ॥ इत्यादि ।

टी— प्रा—

श्रीमते रामानुजाय नमः । श्रीकुरकुलपद्मः पारावारपार्श्वचन्द्रमाश्चतुर्दश-विद्याविद्याधिनीविलासमुकुरविभ्रायमान—श्रीरङ्गनाथककचासमासादित—क्षमारसाम्य-श्रीनिवासभूत-श्रीरङ्गराजभट्टनामधेयकविरचितेन प्राचि...

ग्रन्थपरिसमाप्तौ स्वकृतग्रन्थप्रतिपादितदेवतामेवादौ नमस्करोति । श्रिये ।
समस्तचिदचिदिति । इत्यादि ।

**End.** मूलग्रन्थान्तवाक्यम् ।

ऐश्वर्य्यमक्षरगतिं परमं पदं वा
कस्मैचिदञ्जलिभरं वहते वितीर्य्य ।
अस्मै न किञ्चिदुचितं कृतमित्यथाम्ब
त्वं लज्जसे कथय कोऽयमुदारभावः ॥
इत्युक्तिकैतवशतेन विडम्बयामि
तामम्ब सत्यवचसः पुरुषान् पुराणान् ।
यद्वा न मे भुजगशायि तव पादपद्म-
लाभे त्वमेव शरणं विधितः कृतोऽस्मि ॥
श्रीरङ्गे शरदां शतं सह सुहृद्वर्गेण निष्कण्टकं
निर्दुःखं सुसुखं च दास्यरसिकां भुक्त्वा समृद्धिं पराम् ।
युष्मत्पादसरोरुहान्तररताः स्यामस्त्वमम्बा पिता
सर्व्वं च त्वमपि त्वमेव भवतं स्वीकुर्व्वकस्मात् कृपाम् ॥

इति श्रीगुणरत्नकोषः समाप्तः ॥

टीकाया अन्तवाक्यम् ।

श्रीरङ्गेति — निष्कण्टकादिपदत्रयं क्रियाविशेषणं दास्यरसिकां दास्यरस-सचितां दास्यसमृद्धिमिति यावत् सुहृद्भिः सह शतायुर्वै पुरुषः इत्युक्ता +रवसानपर्य्यन्तं दास्यमेवानुभुय ततः परमपि युवयोः पादपद्मनिरता भवामः । अस्माकं मातापितृप्रभृतिसकलं त्वमेव सम्बन्धश्च त्वमेव तस्माद-कस्मात् कृपां निर्हेतुकदयां अस्मद्विषये स्वीकुरुष्वेति सर्व्वं समञ्जसम् ।

**Colophon.** इति श्रीमद्रामानुजाचार्य्यविरचित-श्रीगुणरत्नकोषव्याख्यानं समाप्तम् ।

**विषयः ।** रङ्गनाथनामाङ्कितस्य भगवतो विष्णोः शक्त्याश्च लक्ष्मीदेव्याः स्तवात्मकोऽयं ग्रन्थः ।

---

**No. 55.** गोत्रप्रवरदर्पणः. By कमलाकरभट्टः. Substance, country-made paper, 19×4 inches. Folia, 22. Lines, 6 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, Calcutta, Çyāmapukura, Bābu Nagendranātha Vasu. Appearance, fresh. Prose. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।
नारायणात्मज-श्रीमद्रामकृष्णस्य सूनुना ।
कमलाकरसंज्ञेन गोत्रप्रवरनिर्णयः ।
क्रियते विदुषां प्रीत्यै ग्रन्थानालोच्य सर्व्वशः ॥
तत्र सगोत्राय' दुहितरं न यच्छेत् : असमानप्रवरैर्विवाह इत्यापस्तम्ब-
गौतमाचार्य्यैः सगोत्रा सप्रवरा निषिद्धा । इत्यादि ।

**End.** भोगतस्तां परित्यज्य पालयेज्जननीमिव ।
अज्ञानादेव वै गच्छेत् त्रिभिर्गर्भैस्तु कश्यप ॥ इति ।
तच्छ्रोत्रियोपलभ्या स्यादिविषयत्वेन अपणमिति दिक् ॥

**Colophon.** इति श्रीकमलाकरभट्टकृत-गोत्रप्रवरदर्पणः समाप्तः ॥ ० ॥

**विषयः ।** समानगोत्रादिविवाहदोषकथनमुखेन गोत्रप्रवरादिनिरूपणम् ।

---

**No. 56.** गोत्रप्रवरविवेकः. (धर्म्मप्रदीपान्तर्गतः) By धनञ्जयः. Substance, country-made paper, 14 × 3 inches. Folia, 3. Lines, 5 on a page. Extent, 42 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office, Rūpaganja, Nāorā, Paṇḍita Çivacandra Bhaṭṭācāryya. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीसूर्य्याय नमः ।
अथ गोत्रप्रवरविवेकः ।
जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः ।
वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥
एतदुपलक्षणम् । अन्येषामपि दर्शनात् । प्रवरस्तु गोत्रप्रवर्त्तकस्य मुने-
र्व्यावर्त्तको मुनिगणः । जमदग्निगोत्रस्य जमदग्नि-और्व्व-वशिष्ठाः । भरद्वाज-
गोत्रस्य भरद्वाज-आङ्गिरस-बार्हस्पत्याः । विश्वामित्रगोत्रस्य विश्वामित्र-
मरीचि-कौशिकाः । अत्रिगोत्रस्य अत्रि-आत्रेय शातातपाः । इत्यादि ।

**End.** धन्वन्तरिगोत्रस्य धन्वन्तरि-अपार-नैध्रुव-आङ्गिरस-बार्हस्पत्याः । एवमन्ये
व्यवहारतो ज्ञातव्याः । विष्णुवृद्धिगोत्रस्य विष्णुवृद्धि-आङ्गिरस-बार्हस्पत्याः ॥

**Colophon.** इति धनञ्जयकृते धर्म्मप्रदीपे गोत्रप्रवरविवेकः ॥ इति श्रीदुर्गा ॥

**विषय:।** गोत्रलक्षणम् । प्रवरलक्षणम् । जमदग्निप्रभृतिसप्तर्षिगोत्राणां प्रवरकथनम् । मतभेदमाश्रित्य केषाञ्चिद्गोत्राणां प्रवरस्य द्वैविध्यकथनञ्च ।

---

**No. 57.** गोपालपञ्चाङ्गम्. (गोपालपटल-गोपालमन्त्रपद्धति गोपालसहस्र-नाम-गोपालकवच-गोपालस्तवराजात्मकम्) Substance, country-made paper, 7×4 inches. Folia, 104. Lines, 5 on a page. Extent, 100 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः । शुभम् ।
ॐ गोपीजनान्ते प्रवदेद् वल्लभायाग्निसुन्दरी ।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥
अथ पूजाप्रकरणम् । इत्यादि ।

**End.** राजव × × × मेति भवेत् सर्व्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥

**Colophon.** इति श्रीगौतमीयतन्त्रे गोपालस्तवराजः समाप्तः ॥

**विषय:।** अङ्गन्यास-ध्यान-बिन्दुबीज कामबीज-अङ्गमन्त्राद्यात्मकगोपालपटल-गोपालमन्त्र-पद्धति—सम्मोहनतन्त्रोक्तहरपार्व्वतीसंवादमयगोपालसहस्रनाम—सनत्कुमारसंहितान्तर्गतत्रैलोक्य-मङ्गलनामगोपालकवच-गौतमीतन्त्रान्तर्निविष्टगोपालस्तवराजात्मकोऽयं ग्रन्थः ॥

---

**No. 58.** गोपालसहस्रनामभूषणम्. By दयालुशर्म्मा. Substance, country-made paper, 16×5 inches. Folia, 31. Lines, 16 on a page. Extent, 1,200 çlokas. Character, Nāgara. Date, Sм. 1885. Place of deposit, District Medinīpura, Candrakoṇā, Bhārata Rāmānuja Dāsa. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीमते रामानुजाय नमः । श्रीविद्यागुरवे नमः ।
ॐ नमः श्रीभुवनेशाय देवाय दुरितच्छिदे । (?)
कृष्णाय तदुपज्ञाय गुरवे बुद्धिसाक्षिणे ॥
चिकीर्षेर्नामसाहस्रभूषणं गोपिकापतेः ।
शिवः शिवदया × × र्मे दाक्षिण्यमवताद् विभुः ॥
जयजय + + + + + ।

इत्थ मत्र सकलभुवनवन्द्यानवद्यैकशरणचरणा पञ्चरार्पितवसुमतीमण्डला गौरी निजस्वामिनं शङ्करं जगतां सुखकरं शिवं इच्छति तदनन्तर्गतु-मिच्छतीति शङ्कराभिन्नाश्रयत्वमर्थानामनुकूलव्यापाराश्रया गौरीति शाब्द-बुद्धेरित्यादि ॥

End. हे महादेवि तस्य गृहे सदा सर्व्वस्मिन् काले श्रीगोपालो देवः वसेत् यस्य गेहे नाम्नां सहस्रमिति पूजितमपि तिष्ठति किं पुनरभ्यस्तमिति सिद्धम् ।

इति श्रीगोपालसहस्रनामस्तोत्रं विवृतं समाप्तम् ॥

बुद्धौ शुद्धिमतो निरीक्ष्य नितरां गौडान् क्रियासु स्थिरान्

प्रायो द्राविडभूसुरानिति यदोर्वंशावतंसो विभुः ।

शाम्भव्यालनयात्युपासनपरानवानयनभूसुरां-

स्त्वाकद्वीपनिवासिनोऽथ सवितुर्भर्गानुकूपान् भुवि ॥

सारस्वताः कान्यकुब्जा गौडा उत्कलमैथिलाः ।

पञ्चगौडाः समाख्याता विन्ध्यस्योत्तरवासिनः ॥

+ + × +

मास्मान् विस्मर यादवेन्द्र जगतां नाथेन्द्रदर्पापह्न्

\+ + + + ।

\+ + + + +

दीनानाथदयानिधे दयितया नाथान् सनाथान् कुरु ॥

Colophon. इति श्रीभगवदर्पितसर्व्वस्वेन भूदेवशर्म्मशिष्येण मिश्रश्रीमद्दयालुशर्म्मणा विरचितं श्रीगोपालसहस्रनामभूषणं समाप्तम् ॥ संवत् १८८५ ॥

विवरण: । गोपालसहस्रनामस्तोत्रस्य व्याख्यानम् ।

---

**No. 59. गोपालसहस्रनामविवृतिः.** Substance, country-made paper, 13 × 5 inches. Folia, 52. Lines, 5 on a page. Extent, 150 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

ॐ नमः श्रीभुवनेशाय देवाय दुरितच्छिदे ।

कृष्णाय तदुपज्ञाय गुरवे बुद्धिसाक्षिणे ॥

चिकीर्षोर्नामसाहस्रभाष्यं श्रीगोपिकापतेः ।
शिवः शिवदयाक्षोमे दाक्षिण्यमवतादिभुः ॥ इत्यादि ।

**End.** यस्य गेहे नाम्नां सहस्रमिति पूजितमपि तिष्ठति किं पुनरभ्यस्तमिति ॥

**Colophon.** इति श्रीगोपालसहस्रनामविवृतिः समाप्ता ॥

**विषयः ।** गोपालसहस्रनामव्याख्यानम् ।

---

**No. 60.** गौरगणोद्देशदीपिका. By कविकर्णपूरः. Substance, country-made paper, 13 × 5 inches. Folia, 10. Lines, 13 on a page. Extent, 325 çlokas. Character, Bengali. Date, ? Place of deposit, Seyādsol *viâ* Rāṇīgañja Çrīcandranānda Ṭhākura. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ।
यः श्रीवृन्दावनभुवि पुरा सच्चिदानन्दसान्द्रो
गोपाङ्गीभिः सहरसचिभिः श्यामधामा ननर्त्त ।
ताभां शश्वत् इठतरपरीरम्भसम्भेदतः किं
गौराङ्गः स न जयति नवद्वीपमालम्बमानः ॥ इत्यादि ।

**End.** गौराङ्गकाम्मशरणौ चिरञ्जीवसुलोचनौ ।
नयेत × × मुर्व्वीख्यामिति शास्त्रानुसारतः ॥
श्रीश्रीनाथस्य पूर्व्वाख्या मया न प्रकटीकृता ।
+ + कारपरीपाट्या यो भागवतसंहिता ॥
कुमारहट्टे यत्कीर्त्तिः कृष्णदेवो विरयाम (?)
× × मत्वाभः क्रमभङ्गभूता-
स्ते मेऽपराधं कृपया क्षमन्तु ।
गुणान् विनिर्णीय सतां स + +
मश्लेषशेषाः कथितुं न शक्ताः ॥
मीमांसकेभ्यः शठतार्किकेभ्यो
विशेषतो चेतुवचः + + ।
गोप्यः प्रयत्नादसमासविद्भ्यो
देयः सदा गौरपदाश्रयेभ्यः ॥

श्रीगौराङ्गगणोद्देशदीपिका रचिता मया ।
दीयतां परमानन्दसन्दोहा भक्तवेश्मनि ॥
शाकेवसुग्रहमितैव युक्ते + ×
ग्रन्थो ममाविरभवत् कथमस्य वक्त्रात् ।
चैतन्यचरितामृतममृतघिशैः
शोध्यः नितगौरगणाख्य एषः ॥ (?)

Colophon. इति श्रीकविकर्णपूरविरचिता श्रीगौराङ्गगणोद्देशदीपिका समाप्ता ॥ ० ॥

विषयः । नित्यानन्दाद्वैतादिसकलगौराङ्गपार्षदनामादिनिरूपणम् ।

---

**No. 61.** चन्द्रदूतम्. By श्रीकृष्णचन्द्रतर्कालङ्कारः. Substance, country-made paper, 14×3 inches. Folia, 14. Lines, 4 on a page. Extent, 112 çlokas. Character, Bengali. Date, ? Place of deposit, Āḍāihājār, District Ḍhākā, Paṇḍita Candrakānta Vidyālaŋkāra. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
रामो रामाभिरामो रमितकरभरैरात्मरामाधिरामो-
मग्नो मोमुह्यमानो झटिति वियति तं वीक्ष्य चन्द्रं तदीयैः ।
स्मरोऽयं वा स्मरो वा स्मररिपुरिति वा स्वर्मणिर्वा विभाति
प्राणेशीवक्त्रचन्द्रः किमु गगनचरस्तर्कयामास चैतत् ॥
नायं स्मरः कुवलयवपुर्न स्मरः स्वङ्गलक्ष्मा
मारप्रादुर्भवनवपनो न स्मरारि ... ... ... ।
न प्राणेशीसुवदनशशी कुरगो यत् ... ...
जाने प्राणप्रणयविकली दुःखशङ्की शशाङ्कः ॥ इत्यादि ।

**End.** इति निगदितवाक्यः प्रेक्षमाणः शशाङ्कं
मदनशरचलाङ्गो वर्द्धिता रिङ्गमाणः ।
विरहजलधिजेन प्रेमवारिप्रपूर्णो
रघुवरकुलसिंहः स्मानसे सम्पपात ॥
इति कतिपयवेलाः संस्थितो मूर्च्छितात्मा
किमिति किमिति वाक्यैर्बोधितो लक्ष्मणेन ।
झटिति करिकरौघैः चालिताशाश्च दृष्ट्वा
शिव शिव विदितात्मा जिज्ञयामास रामः ॥

**Colophon.** इति श्रीगोपीकान्तभट्टाचार्य्यात्मज-श्रीकृष्णचन्द्रतर्कालङ्कारविरचितं चन्द्र-
दूतमहाकाव्यं समाप्तम् ॥
मत्काव्यपीयूषरसप्रमोदो येषाञ्च ... ... ... ... ।
पठन्तु ते मत्कृतकाव्यमेतत् श्रीराम ... कोमलाङ्गम् ॥
श्रीहरिकृष्णशर्म्मणो लिपिरेषा पुस्तिका चं ।

**विषय: ।** सीतां प्रति रामस्य दूतरूपेण चन्द्रमसः प्रेषणम् ।

---

**No. 62.** चम्पूभारतम्. By अनन्तभट्टः. Substance, country-made paper, 14×3½ inches. Folia, 89. Lines, 7 on a page. Extent, 1869 çlokas. Character, Bengali. Date, ? Place of deposit, Vēḍo, Post Office Raghunāthapura, District Mānabhūma Veŋkaṭa, Varadācāryya Gosvāmī, Appearance, tolerable. Prose and verse. Incorrect.

**Beginning.** कल्याणं वो विधत्तां करठमदधुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्‌प्रक्रवाकाम्बरालम् ।
प्रत्नं वेतसरत्नं सततपरिचलत्कर्णतालप्ररोहं
दूताङ्कुरचिह्नीर्षादरविहतफणाग्रङ्गभूषाभुजङ्गः ॥ (?) इत्यादि ।

**End.** शौरेर्दोष्णा घटितनिजदोर्द्दर्म्मभूर्वेदिपार्श्वे
साहस्रीणां शतमखदृशां सन्धानोऽभ्यसूयाम् ।
तत्राध्यर्त्तुं नियमपरधीराजसाराश्वमेधं (?)
... ... ... ... ... ... ... ... ... ॥
राज्ञां मौलिपरम्परां चरणयोः पाणौ प्रदानश्रियं
बुद्धो रजेन योदयं हृदि कृपां सत्यं रसज्ञाञ्चले । (?)
बाहौ सागरमेखलां वसुमतीं मस्ते किरीटं मुदा
कुर्व्वन्नर्म्मतनूभवश्चिरमसौ गोपायति स्म प्रजाः ॥ * ॥

**Colophon.** इत्यनन्तभट्टस्य कृतौ चम्पूभारते द्वादशस्तवकः समाप्तोऽयं ग्रन्थः ॥

**विषय: ।** संक्षेपेण महाभारतीयविषयस्य कथनम् ।

---

**No. 63.** चिकित्सादर्पणः. Substance, country-made paper, 14×5 inches. Folia, 313. Lines, 10 on a page. Extent, 9390 çlokas. Character, Bengali. Date, ? Place of deposit, Vākule, Post Office Sālatāḍā, District Vāँkuḍā. Bābu Balarāma Caudhuri. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमः शिवाय ।

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत् ॥
औषधा नीरसाः सर्व्वे मन्त्रयित्वा प्रदापयेत् ।
तेन सर्व्वं प्रयच्छन्ति आयुरारोग्यमेव च ॥
अथातो मूलिकाहरणविधिमाह ।
स्वभावारण्यमेकाले प्रभाते मन्त्रयुक्तितः ।
संग्राह्यमौषधेनैव न चेद्भवति काष्ठवत् ॥ इत्यादि ।

End. कोषातकी नीलकणा लाङ्गली सहदेविका ।
चक्रमर्दाम्लताकन्दकाकमाचीरविप्रिया ।
विष्णुक्रान्ता हस्तिशुण्डी विदारी भृङ्गराट् पटुः ॥

Colophon. अतःपरं खण्डितम् ॥ ० ॥

विषयः । औषधपञ्चकरणादिनिरूपणम् । भेद्यादिज्वराङ्कुशनिरूपणम् । बृहत्कुठाराादिकथनम् । काञ्जिकरसादिनिरूपणम् । वारवल्लिकथनम् । लघुगङ्गाधरचूर्णादिनिरूपणम् । ग्रहण्यादिचिकित्सा । महाशङ्खवट्यादिनिरूपणम् । शतावरीघृतादिनिरूपणम् । मूत्रादिचिकित्सा । उदररोगादिचिकित्सा । निर्गुण्डीतैलादिनिरूपणम् । कुष्ठरोगचिकित्सादिः । कर्णरोगादिचिकित्सा । शिरोरोगादिचिकित्सा च ॥

---

No. 64. चित्रकूटमाहात्म्यम्. Substance, country-made paper, 8×5 inches. Folia, 40. Lines, 11 on a page. Extent, 880 çlokas. Character, Nāgara. Date, Sm. 1933 Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

Beginning. श्रीमते रामानुजाय नमः ।

रामं कामाभिरामं रघुकुलतिलकं सीतया शोभनीयं
श्यामं भक्ताभिरामं स्वजनभयहरं वामदेवाभिवन्द्यम् ।
कामं कामाभिरामं कलिकलुषहरं कामदं कामदानां
वन्दे लोकाभिरामं दशरथतनयं रावणारिं रमेशम् ॥
यतः सर्व्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥

... ... ... ...

श्रुत्वा रामायणं लब्ध-रामचारित्रभूषितम् ।
भुशुण्डिं परिपप्रच्छ शाण्डिल्यो भगवानृषिः ॥
शाण्डिल्य उवाच ।
श्रुतं त्वत्तः कृपासिन्धो जगदुत्पत्तिकारणम् ।
अधुना श्रोतुमिच्छामि तीर्थमाहात्म्यमुत्तमम् ॥
चित्रकूटो गिरिश्रेष्ठः श्रीरामपदभूषितः ।
यस्मिन् श्रीजानकीनाथो रमते सर्व्वदैव हि ॥
माहात्म्यं श्रोतुमिच्छामि रहस्यं श्रुतिसम्मितम् ।
श्रुतञ्च परमैश्वर्य्यं श्रीरामस्य गिरेः प्रभो ॥ इत्यादि ।

**End.** माहात्म्यमेतत् कथितं पुरातनं वाल्मीकिगीतं सुतधान्यवर्द्धनम् ।
शृण्वन्ति गायन्ति पठन्ति ये नरास्ते रामभक्तिं सततं लभन्ते ॥

**Colophon.** इति श्रीबृहद्रामायणे श्रीचित्रकूटमाहात्म्ये समस्ततीर्थवर्णनं नाम षोडशो-ऽध्यायः समाप्तः । जेठ वदि संवत् १९११ अवस्थान श्रीचित्रकूट ।

**विषयः** । चित्रकूटमाहात्म्यकीर्त्तनम् । प्रसङ्गतः सर्व्वतीर्थानां माहात्म्यकीर्त्तनञ्च ।

---

**No. 65.** **चैतन्यचन्द्रामृतम्**. By **प्रबोधानन्दसरस्वती**. Substance country-made paper, 13 × 3 inches. Folia, 37. Lines, 3 on a page. Extent, 277 çlokas. Character, Bengali. Date, ? Place of deposit, Seyāḍsol, District Vardhamāna, *Çrī* Candranātha Ṭhākura. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** श्रीगौराङ्गः शरणम् ।
सुमत्तं चैतन्याकृतिमतिविमर्य्यादपरमा-
द्भुतौदार्य्यं वर्य्यं व्रजपतिकुमारं रसयितुम् ।
विशुद्धस्वप्रेमोन्मदमधुरपीयुषलहरीं
प्रदातुं चान्येभ्यः परपदनवद्वीपप्रकटम् ॥ इत्यादि ।

**End.** अस्मिन्नादिमचातुर्य्यमत्रिमापि महाप्रभुः ।
मुग्धबालोदितं श्रुत्वा-किशोरस्य भविष्यति ॥

दृष्टं न शास्त्रं गुरवो न दृष्टा
विवेचितं नापि बुधैः सुबुद्धा ।
यथा तथा जल्पतु बालभावात्
तथैव मे गौरहरिः प्रसीदतु ॥ ० ॥

**Colophon.** इति श्रीप्रबोधानन्दसरस्वतीगोस्वामिना विरचितं श्रीमच्चैतन्यचन्द्रामृतं सम्पूर्णम् । श्रीश्रीनरहरिचैतन्य ॥

**विषयः ।** श्रीचैतन्यदेवस्य स्तवः ।

---

**No. 66.** **चैतन्यचन्द्रामृतव्याख्या. (रसिकास्वादिनी).** Substance, country-made paper, 12 x 4 inches. Folia, 40. Lines, 11 on a page. Extent, 1,320 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Uthuli, *Çrī* Dinabandhu Gosvāmī. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीकृष्णचैतन्यचन्द्राय नमः ।
कृत्वा दण्डप्रणामं स्वगुरुवरमहाश्रीनृसिंहाङ्घ्रिपद्मे
केनाप्यानन्दि-नाम्ना प्रकरणघटिका रच्यतेऽनर्घ्यबुद्धा ।
टीका चैतन्यचन्द्रामृतरसरसिकास्वादिनी वैष्णवानां
देवास्त्रीनामिवासत्कुलदनुजघटा मोहिनीव ... ॥ इत्यादि ।

**End.** तसात् श्रवणादिपूर्व्वकप्रेमामृतवर्णितं सूचितम् ।
प्रेमनाम ... त्यादि श्रीवृन्दावनमाधुरीम् ।
राधिकायाः विजानीयात् को वा गौरहरिं विना ॥ * ॥

**Colophon.** इति श्रीचैतन्यचन्द्रामृतेऽवतारमहिमप्रकाशे विंशतिपद्यात्मके रसिकास्वादिन्यां टीकायां संशयो विभागः ॥

**विषयः ।** चैतन्यचन्द्रामृतस्य व्याख्यानम् ।

---

**No. 67.** **छन्दः.** Substance, country-made paper, 6 x 3 inches. Folia, 12. Lines, 8 on a page. Extent, 115 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Gobinda Bhaṭṭa Solāpurkār. Appearance, old. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय परापर्य्याय श्रीकृष्णाय नमः । ॐ ।
म-य-र-स-त-ज-भ-न-ल-ग संमितं भ्रमति वाङ्मयं जगति यस्य
स जयति पिङ्गलनागः शिवप्रसादाद्विशुद्धमतिः ।
त्रिगुरुविद्धि मकारं लघ्वादिसमन्वितं यकाराख्यं
लघुमध्यमन्तरे यं सकारमन्ते गुरुनिबद्धम् ॥ इत्यादि ।

**End.** शेषः प्रचित इति । छन्दानुक्तं गाथा । द्विकौलौ । मिश्रौ । पृथग्गा
मिश्राः वसवस्त्रिकाः ।

**Colophon.** इति छन्दः समाप्तम् ॥

**विषयः ।** छन्दसां विशेषेण कथनम् ।

---

**No. 68.** **जन्मचन्द्रिका.** Substance, palm leaf 15 × 1½ inches. Folia, 59. Lines, 3 on a page. Extent, 463 çlokas. Character, Bengali. Date, ? Place of deposit, Kalasakāti *viá* Barisāl, Paṇḍita Kāçiçvara Tarkālaŋkāra. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः सूर्य्याय । अथ जन्मचन्द्रिका लिख्यते । अथ पापसौम्यग्रह-
निर्णयः । अर्क्की-मेन्द्वर्क-सौराराः पापाः सौम्यास्ततोऽपरे । इत्यादि ।

**End.** शत्रुस्थाने स्थितो जीवो रिपुगेहो विधोः सुतः ।
एष शस्त्रहतो योगो यदि शक्रसमो भवेत् ॥

**Colophon.** इति जन्मचन्द्रिका समाप्ता ॥

**विषयः ।** पापादिग्रहनिर्णयः । ग्रहदृष्ट्यादिकथनम् । ग्रहक्षेत्रादिनिरूपणम् । ग्रहाणा-मुच्चनीचादिकथनम् । ग्रहाणां मूलत्रिकोणादिकथनम् । मासत्रिकदशादिकथनम् । ग्रहाणां स्त्रीपुरुषज्ञानम् । योगादिकथनञ्च ॥

---

**No. 69.** **जातरिष्टादिनिर्णयः.** By **विद्यार्णवः.** Substance, country-made paper, 13 × 2½ inches. Folia, 35. Lines, 5 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, Ākiādhala, Post Office Lohajaŋga, District Ḍhākā, Paṇḍita Kāçīnātha Tarkālaŋkāra. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

प्रणम्य परमानन्दं लक्ष्मीं त्रिभुवनेश्वरम् ।

वक्ष्ये विद्यार्थनो विद्वान् जातरिष्टादिनिर्णयम् ॥

आदौ गण्डनिरूपणम् । दीपिकायाम् ।

अश्विनी-मघ-मूलानां त्रियो गण्डाद्यनाडिकाः ॥ इत्यादि ।

**End.** अपिद्धतत्वात् शेषो नास्ति ।

**विषयः।** गण्डादिनिरूपणम् । जन्मस्थानादिनिरूपणम् । जातकशिरोज्ञानादि-निरूपणम् । दशाधिपादिकथनम् । मूर्द्धादिप्रसवज्ञाननिरूपणम् । रिष्टादिनिरूपणञ्च ।

---

**No. 70.** जानकीगीता . By श्रीहर्य्याचार्य्यः . Substance, country-made paper, $7\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 9. Lines, 11 on a page. Extent, 198 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Bharatarāmānuja Dāsa. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीमते रामानुजाय नमः ।

साधाव्यमर्पयति भक्तिलवेऽप्युदयं

प्रेमणि प्रदर्शयति पादसरोजशोभाम् ।

विघ्नं निवारयति या भजतां समन्तात्

सा जानकी विजयते कुलदैवतं नः ॥

विद्युद्घनत्वातिमवाप निरीक्ष्य कान्तिं

क्षोभं करीन्द्रनिकरो गतिमाकलय्य ।

यस्या विलोक्य वदनं परितापमिन्दुः

सा जानकी रघुपतेर्मुदमातनोति ॥

× × × ×

गन्धार-रागे एकताली ताले ।

जय जय जानकि रघुपतिदयिते

विधि-शिव-सनक-शुकादिकमथिते ।

देवि शरणं तव करुणा अभिलषिता

त्रिभुवनगुरुणा । ध्रु ॥ इत्यादि ।

**End.** जय जितदूषणा सुरकुलभूषणा जय जय हरिदयिते ।
जय कविकमलविरोचन सुन्दर जय जय निखिले हिते ॥
जय दशमुखबलनिकरकुलाशन जय जय युवतिमणे ।
जय जय सदयहृदय सकलेश्वर जय जय नतशरणे ॥

+ + +

विद्याविभूषणयुतो हरिरत्ननाभ-
पादारविन्दमधुपो यदिदं बभण ।
श्रीजानकीचरितगीतसुदप्रभावात्
तत् साधवः प्रतिदिनं मुदिताः पिबन्तु ॥

**Colophon.** इति श्रीचर्य्याचार्य्यविरचिते श्रीजानकीगीते आनन्दसीतारघुनन्दनो नाम षष्ठः सर्गः ॥

**विषयः।** गीतगोविन्दानुकारिणी श्रीजानकीविषयिणी गीतावलिः ॥

---

**No. 71.** जालन्धरमाहात्म्यम् (ब्रह्माण्डपुराणीयम्). Substance, country-made paper, 13 × 5 inches. Folia, 36. Lines, 10 on a page. Extent, 1,080 çlokas. Character, Nāgara. Date, Sм. 1839. Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । शौनकादय ऊचुः ।
सूत सूत महाभाग सदागमविदाम्वर ।
धन्योऽसि लतकृत्योऽसि यस्य ते मतिरीदृशी ॥
जालन्धरस्य माहात्म्यं भावितं कुलपावन ।
पुनश्च श्रोतुमिच्छामस्त्वत्तः किञ्चिन्महाव्रत ॥ इत्यादि ।

**End.** वक्तुमर्हसि सर्व्वं हि किं वाच्यमधिकं मया ॥

**Colophon.** इति श्रीब्रह्माण्डपुराणे जालन्धरमाहात्म्ये त्रयोदशोऽध्यायः । सम्वत् १८३९

**विषयः।** १ मे अध्याये विपाशामाहात्म्यम् । २ये अध्याये वाणगङ्गाख्यापनम् । ३ ये अध्याये तस्य माहात्म्यकीर्त्तनम् । ४ र्थ–१३ शेषु अध्यायेषु जालन्धरमाहात्म्यादिकथनम् ।

---

**No. 72.** **ज्योतिषरत्नं**. By **केशवतर्कपञ्चानन**. Substance, country-made paper, 13 × 3 inches. Folia, 15. Lines, 7 on a page. Extent, 420 çlokas. Character, Bengali. Date, Sk. 1748. Place of deposit, Vākule *vid* Sālatadā, District Vākudā, Bābu Candicarana Cattopādhyāya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ राधाकृष्णाभ्यां नमः ।
श्रीकृष्णं सच्चिदानन्दं प्रणम्य जगदीश्वरम् ।
हिताय ज्योतिषः श्लोकान् सञ्चिनोमि यथोचितम् ॥
अथ सर्व्वकार्य्येषु वर्ज्जनीयत्वात् प्रथमं वारवेला लिख्यते ।
रवेर्वेदं चतुः पञ्च सोमे सप्तद्वयं तथा ।
कुजे षष्ठं द्वितीयञ्च बुधे वाणतृतीयकम् ॥
गुरौ सप्ताष्टकञ्चैव चित्वारि च भार्गवे ।
शनावाद्यन्तषष्ठञ्च वारवेला प्रकीर्त्तिता ॥ इत्यादि ।

**End.** खदशाभिर्द्दशां हत्वा नवभिर्भागमाचरेत् ।
लब्धा मासास्तु तच्छेषं पूरयित्वा तु त्रिंशता ॥
षड्भिर्हृत्वा दिनं लब्धं तच्छेषे षष्टिपूरिते ।
नवभिश्च हृते लब्धा ज्ञेया दण्डाखदक्रमे ॥
ज्योतिःशास्त्रसमाब्धिभ्योः सारात्सारतरं कृतम् ।
ग्रन्थरत्नमेतत् सततं व्यवहारोपयोगि यत् ॥ * ॥

**Colophon.** इति श्रीकेशवतर्कपञ्चाननभट्टाचार्य्यविरचितं ज्योतिषरत्नं समाप्तम् ॥ * ॥
शकाब्दाः १७४८ ।

**विषयः ।** वारवेलाकथनम् । रिष्टादिकथनम् । चन्द्रवामवेधशूलादिकथनम् । नक्षत्राणां देवतानिरूपणम् । अमृतयोगादिकथनम् । विवाहविहितनक्षत्रादिनिरूपणम् । सप्तशलाकावेधादिनिरूपणम् । युगयामित्रादिकथनम् । नववध्वागमनकालादिकथनम् । ऋतुफलादिनिरूपणम् । अन्नकरणान्नप्राशनादिकालनिरूपणम् । तिथिदग्धादिकथनम् । पञ्चाङ्गसादिकथनम् । बीजवपनादिनिरूपणम् । रव्यादिभोगकालनिरूपणञ्च ।

---

**No. 73.** **ज्योतिःसारः**. By **श्रीकृष्णदेवस्मार्त्तवागीशभट्टाचार्य्यः**. Substance, country-made paper, 17 × 3½ inches. Folia, 92. Lines, 7 on a page. Extent, 2,576 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinipura, Rādhānagara, Pandita Guruprasanna Vidyāratna. Appearance, tolerable Prose and verse. Correct.

**Beginning.** श्रीकृष्ण शरणं मम ।

श्रीसूर्य्यं विघ्नराजञ्च श्रीगुरुं श्रीरघूत्तमम् ।
नत्वाथ श्रीकृष्णदेवो ज्योतिःसारं सतां मुदे ॥
प्रकाश्यते प्रदीपेन वर्त्तमानघटादिकम् ।
ज्योतिःशास्त्रप्रदीपेन विश्वं कालत्रयोदितम् ॥
सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम् ।
तदर्कांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥
अस्यार्थो यथा,—अश्विन्यादिसप्तविंशतिनक्षत्रैः ज्योतिश्चक्रं भवति तच्चक्रं स्तिमितवायुगं स्थिरेण वायुविशेषेण धृतम् । तस्यार्कांशो द्वादशांशो अश्विन्यादिनक्षत्रनवपादाङ्कितो राशिर्भवेत् । तथाच अश्विन्यादिसप्तविंशानां भानां नवनवाङ्घ्रिभिरेकैकराशिर्मेषादिद्वादशैव ते ॥ इत्यादि ॥

**End.** अतएव विष्णुपुराणम् ।

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥
रिष्टयो व्यतिपाताश्च येऽन्ये लग्नोतिसम्भवाः ।
ते नामस्मरणाद्विष्णोर्नाशं यान्ति महात्मनः ॥
विदेशगतभ्रातुरन्वेषणाय न गन्तव्यम् ।
विष्णुपुराणम् ।
ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विज ।
प्रयातो न पश्यति तथा तन्न कार्य्यं विजानता ॥
ततः प्रभृति न भ्रातुः कनीयान् मार्गमिच्छति ।
अन्विष्य दुःखमाप्नोति तेन तत्परिवर्जयेत् ॥
इति यात्राप्रकरणं समाप्तम् ।

**Colophon.** इति महामहोपाध्याय—श्रीकृष्णदेवस्मार्त्तवागीशभट्टाचार्य्यविरचितो ज्योतिःसारः समाप्तः ॥

**विषयः ।** राशिनिरूपणम् । केन्द्रपर्य्यायतत्स्थाननिरूपणम् । ग्रहवर्णकथनम् । दिगधिपनिरूपणम् । दिग्बलिकथनम् । गुणरसाधिपकथनम् । जात्यधिपकथनम् । वेदाद्यधिपकथनम् । दुष्टतिथिनिरूपणम् । ग्रहचन्द्रादिशुद्धिनिरूपणम् । जातक-सुखप्रसवादिजातकयोगप्रभृतिनिरूपणम् । पापग्रहरिष्टिकथनम् । रिष्टिभङ्गादिनिरूपणम् । द्विग्रहयोगफलनिरूपणम् । अन्तर्दशाफलादिनिरूपणम् । ऋतुप्रभृतिफलनिरूपणम् । यात्राप्रकरणञ्च ॥

---

**No. 74.** ज्योतिःसारः. By महेशपञ्चानन. Substance, country-made paper, 17 × 3 inches. Folia, 26. Lines, 5 on a page. Extent, 650 çlokas. Character, Bengali. Date, ? Place of deposit, Kājoḍā, District Bardhamāna *viâ* Anḍāl, Paṇḍita Mādhava Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो विवस्वते ॥
प्रणम्य भास्करं देवं बालकानां विमेधिषा ।
क्रियते श्रीमहेशेन सारो ज्योतिषि यत्नतः ॥
वैशाखो ज्यैष्ठ आषाढ़ः श्रावणो भाद्रसंज्ञकः ।
आश्विनः कार्त्तिको मार्गः पौषो माघस्तथैव च ॥
फाल्गुनश्चैव इत्येव मासा द्वादश विश्रुताः ।
इति माससंज्ञा ॥ इत्यादि ।

**End.** मैत्रोत्तरापुष्यधनिष्ठयाष्टपित्रोऽम्बुदे + वरुणे शुभेऽर्के
वारे कुशुक्रेन्दुदृहस्पतीनां शुभप्रदः स्यात् सरसः प्रकाशः ॥ * ॥

**Colophon.** इति महेशपञ्चाननविरचितो ज्योतिःसारः समाप्तः ॥ * ॥ श्रीहरिः ।

**विषयः।** मासराशिसंज्ञादिनिरूपणम् । अमृतादियोगनिरूपणम् । रविचन्द्रादिशुद्धिनिरूपणम् । यात्रिकतिथिनक्षत्रादिनिरूपणम् । निषिद्धनक्षत्रादिकथनम् । प्रेक्षाव्यवस्थादिः । जन्मलग्नादिनिर्णयः । चन्द्रादीनां स्थूलदशानिरूपणम् । वर्षणजनिताकालकथनम् । विवाहनक्षत्रादिकथनम् । गणपादादिनिरूपणम् । वास्तुप्रकरणम् । जलप्रवाहादिकालनिरूपणञ्च ।

---

**No. 75.** ज्योतीरत्नम्. By गोपालचक्रवर्त्ती. Substance, country-made paper, $16 \times 2\frac{1}{2}$ inches. Folia, 154. Line, 5 on a page. Extent, 3,850 çlokas. Character, Bengali. Date, Sk. 1631. Place of deposit, District Medinīpura, Post Office Çirṣā, Yadupura, Paṇḍita Rājendralāla Gosvāmī. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।
लक्ष्मीशेशविरिञ्चि-सुररजनीशानीन्दुजक्रूर + + वा-
गीशा स्फु + + नार्किराङ्गशिखिनो मूर्द्ध्ना प्रणम्याम्बिकाम् ।

ज्योतीरत्नमिदं तनोति सुधियां मोदाय नानागमात्
संस्ट्याखिलकर्म्मसु चितिसुरो गोपालनामा कृती ॥
वराचादिकृतान् ग्रन्थानालोक्य बहुशो मया ।
निरूप्यते कर्म्मकाण्डः सविशेषः सतां मुदे ॥
स्वरूपं राशिचक्रस्य नक्षत्राणाञ्च कीर्त्तनम् ।
देवताकीर्त्तनं तेषां नक्षत्रे + + + + ॥ इत्यादि ।

End. शब्दागमं सुनिपुणं कविचन्द्रपादात्
योऽधीत्य तत्र + + सममं व्यतानीत् ।
काव्यादिशास्त्रनिवहेषु तथा × ×
यः सर्व्वदा व्यरचयद् बहुशस्तु पद्यान् ॥
ज्योतीरत्नमिदं तस्य + + + + ।
नानाग्रन्थेषु यज्ज्ञेयं + + + + ॥
वेदाङ्कबाणावनि १५९४ संमितेऽब्दे
शाके दिनेशे प्रमदां गते च ।
गोपालशर्म्मा समपूरि शास्त्र-
मिदं मुदा रूपवता + + + + ॥

Colophon इति श्रीकविचन्द्रचरणारविन्दद्वन्द्वनिःस्यन्द + + + मधुव्रत-श्रीगोपाल-चक्रवर्त्तिविरचितं ज्योतीरत्नं सम्पूर्णम् ॥ श्रीरामः शरणम् । शकाब्दा १६११

विषयः । राशिनक्षत्रनिरूपणम् । सप्तविंशतिनक्षत्रघटितराशिमण्डलनिरूपणम् । लग्न-स्थाननिरूपणम् । कालशुद्धिविवेचनम् । चन्द्रतारादिशुद्धिविवेचनम् । पुंसवनादिकृत्य-निरूपणम् । कृषिकर्म्मादिनिरूपणम् । इष्टिकानादिनिरूपणम् । शुभलग्नादिनिरूपणम् । शक्रोत्थानादिप्रकरणनिरूपणम् ॥

---

**No. 76.** तत्त्वानुसन्धानम् . ( अद्वैतचिन्ताकौस्तुभनामकटीकासहितम् )
Substance, country-made paper, 14 × 5½ inches. Folia, 147. Lines, 12 on a page. Extent, 5,292 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Prose and verse. Correct.

**Beginning.** मूलस्य । वृत्तिर्नामविषयचैतन्याभिव्यञ्जकोऽन्तःकरणाज्ञानयोः परिणामविशेषः । अभिव्यञ्जकत्वं नामापरोक्षव्यवहारजनकत्वमावरणपरिणामो नाम ।

इत्यादि ।

टीकायाः प्रारम्भवाक्यम् । श्रीकृष्णाय नमः ।
प्रमातारं मानं फलमपि च मेयं त्रिजगतां
नियन्तारं जीवं विगलितभिदं शुद्धममलम् ।
यमाहुर्योगीन्द्रा अकृतनुसमासन्नवशतो
नमामस्तं कृष्णं व्रजयुवति ... कमलम् ॥
तत्त्वमस्यादिवाक्यजन्याखण्डापरोक्षवृत्त्या ज्ञाननिवृत्तिरानन्दावाप्तिश्च भवतीत्युक्तं तत्र केयं वृत्तिः किं वा तत्र प्रमाणं कथं वा तदुत्पत्तिः वृत्त्या वा किं प्रयोजनमित्याकाङ्क्षायां प्रमाप्रमाभेदेन द्विविधां वृत्तिं निरूपयितुं प्रथमां वृत्तिं लक्षयति वृत्तिर्नामेति । इत्यादि ।

**End.** मूलस्य ।
परमसुखपयोधौ मग्नचित्तो महेश-
हरि-विधि-सुरमुख्यान् देशिकान् देवमायम् ।
जगदपि न विजाने पूर्णसत्यात्मसंवित्-
सुखतनुरहमात्मा सर्व्वसंसारशून्यम् ॥
यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुखगादीन् ब्राह्मणादीन् न जाने ।
परमसुखसमुद्रे ... ... ... तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्यमहादेवसरस्वतीमुनिविरचितं तत्त्वानुसन्धानं ॥
मतिसचितमध्यानयोगेन बन्धे जीवे साक्षात्ज्ञातोऽसौ मुनिवरनिकरैः शुद्धसत्त्वैर्यदारैर्मुक्तो गम्यो मुकुन्दो यदुकुलतिलकः श्रेयसे भूयसेऽस्तु ॥ (?)
जिज्ञासितव्यो विमलान्तरङ्गै-
रानन्दविज्ञानसदेकरूपः ।
वेदान्तवेद्यो यतिवर्य्यगम्यो
गोपीजनेशः प्रदिशत्वभीष्टम् ॥

वाचीति वेदवचनानि वदन्ति देवीं
यामात्मयोगिनिरटच्छिणीं हृदये स्मरन्ति ।
यश्चिन्मया संकलशास्त्रतो भवन्ति
तामानतोऽस्मि सततं प्रणतेष्टदात्रीम् ॥
दुरन्तसंसारमहाम्बुराशेः
समुद्धृतो येन दयालुनाहम् ।
महत्तमं तं पुरुषोत्तमं श्री-
स्वयंप्रकाशं गुरुमानतोऽस्मि ॥
नामानि रूपाणि निरस्य वेदो
यद्बोधयेन्नित्यनिरस्तमोहम् ।
साक्षिस्वरूपं परिपूर्णरूप-
महं तदेवास्मि विमुक्तगम्यम् ॥

अन्तवाक्यं टीकायाः । पूर्णेति । पूर्णः अपरिच्छिन्नः सत्यात्मा कालत्रयाबाधित-स्वरूपः संवित् चिद्रूपः सुखतनुः सुखस्वरूपः असङ्गोऽयं पुरुष इत्यादि-श्रुत्या कर्तृत्वादिसर्वसंसारवर्जितः आत्माहमित्यनुभवामीत्यर्थः । भिन्न-तया स्वेष्टदेवतामपि न पश्यामीत्याह सदुकुलेति । तत्र हेतुमाह परम-सुखेति ॥

उपासकानां चार्हस्य ममसो विनिवर्तकम् ।
श्रीलक्ष्मास्य गलेऽद्वैतचिन्ताकौस्तुभमर्पितम् ॥
अध्यारोपापवादोन्मूदितजडतनुर्द्वैतहेतुः परात्मा
... ... ... ... ... ... ।
... ... ... ... ... ...
... ... ... मैकगम्यः ... ... ... ॥ (?)
इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्य-पादशिष्यभगवदानन्दसरस्वतीमुनिचूडामणिविरचिते तत्त्वानुसन्धानव्याख्याने-ऽद्वैतचिन्ताकौस्तुभे चतुर्थः परिच्छेदः । समाप्तोयम् ॥

**विषयः ।** मूलस्य । इति प्रथमः परिच्छेदः । टीकायाः । इति श्रीमत्परमहंसपरि-व्राजकाचार्य्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्यभगवन्महादेवानन्दसरस्वतीमुनिविरचिते तत्त्वानुसन्धानव्याख्यानेऽद्वैतकौस्तुभे प्रथमः परिच्छेदः समाप्तः । मूलस्य । इति द्वितीयः परि-च्छेदः । टीकायाः । इति ... ... द्वितीयः परिच्छेदः समाप्तः । मूलस्य । इति तृतीयः

पायादपायबहुलादिह मां विभूत्यै
गोपीजनाङ्गनिभोऽखिलधर्म्मसाक्षी ॥
क्षिति-जल-शुचि-पवन-द्यो-यजमानेन्दुर्कमूर्त्तिर्जयति ।
विश्वं परिरभ्य × × नम ईशायेन्दुमौलये तस्मै ॥
विपुलतनुरतीवनिम्ननाभिः
पलितशिराः करिविन्दुशोणमूर्त्तिः ।
स्मृतिषु नयविदर्थपारदृश्वा
जयति गुरुर्जयरामनामधेयः ॥
वंशाविव पुण्यपक्षौ त्रिलोकचन्द्रः कृष्णचन्द्रः ।
सीमामयस्तवन्तीतीरचरौ नरपतौ जयताम् ॥
तर्कादितन्त्रपरतन्त्रविशुद्धबुद्धि-
रानन्दकन्दभरतेषु विशारदश्च ।
तावेतयोर्विषदकीर्त्तिलताविताण-
च्छायां निषेव्य सुखिनौ सुकवौ शयाते ॥
तौ प्रीणयन् सुवलिताञ्जलि साधुना वा
(?) सन्नद्धवामतनयो व्यय वंशजन्मा ।
मन्वादिशास्त्रमनलीलनधर्म्मजातं
पूर्व्वैरितो व्यवहृतं समुदीरयामि ॥
वैषद्येन व्यञ्जयंस्तूर्णमर्था-
नव्यारम्भः श्रीकृपारामनाम्ना ।
निर्म्मथ्य श्रीकृष्णपादारविन्दे
व्यातेनेऽयं नव्यधर्म्मप्रदीपः ॥
गौडाः स्मृतौ साम्प्रतमाद्रियन्ते
प्रायेण नव्यानुमतान् हि धर्म्मान् ।
अतोऽत्र गौडाहृत एव धर्म्म-
प्रकाशने स्यान्मम पक्षपातः ॥
... ... ... ...
... ... ... ... ।
विश्वाधारं तं प्रपद्यादिहेतुं
कालं वक्ष्याम्यर्पतो भेदतश्च ॥

यश्चाप्यखण्डानन्दबोधः परमात्मा सर्ग-स्थिति-लय-लीन-सकलाधारः सनातनः शुभाशुभकर्म्मफलदानप्रतिभूरेकः कालोऽखण्डदण्डायमानः सिद्ध एव यथाच ।

विष्णुपुराणम् ।

कालस्वरूपं रूपन्तद्विष्णोर्म्मैत्रेय वर्त्तते ।

विष्णुधर्म्मोत्तरम् ।

अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः ।

कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः ॥ इत्यादि ।

**End.** अथ ब्राह्मणवधप्रायश्चित्तमुक्त्वा यस्तैः सह सम्बन्धं कुर्य्यात् तस्यापि प्रायश्चित्तमभिधाय सुमन्तुनोक्तमिति । तेनाततायिवधे नैतत् सूत्रं पूर्व्वोक्तनिषेधकम् । दोषोऽन्यत्रेति सूत्रन्तु आततायिव्यतिरिक्तवधे दोषप्रतिपादकं गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्य्यादिति तु प्रायश्चित्ताङ्गस्नानप्रतिपादकं गोहेतुकं स्नानं व्यासेन प्रतिपादितम् । तथाच व्यासः ।

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु विश्रुतः ।

अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥

ब्राह्मणशब्देनात्र विधिवाच्यमपेक्षितं तद्धेतुकं स्नानं यथाविहिताघमर्षणपूर्व्वकम् । तेन गोहेतुकं स्नातो ब्राह्मणहेतुकं स्नातश्च प्रायश्चित्ताधिकारी भवति तत्राश्रयनमात्रेणेति वाक्यार्थः ।

**Colophon.** ( अतःपरं खण्डितम् ) ।

**विषयः ।** कालनिरूपणम् । धर्म्माधर्म्माणामादिकारणकथनम् दशविधसंस्कार-तिथ्यादि-और्द्ध्वदैहिक-शुद्धि-श्राद्ध-आह्निकाचार-इष्टापूर्त्तादिसमस्तधर्म्माणां निरूपणम् । स्वर्गापवर्गदधर्म्मनिरूपणम् । राजधर्म्मनिरूपणम् । धर्म्माधर्म्मविवर्त्तनकथनञ्च ॥

---

**No. 114.** नारायणार्च्चारत्नमाला By भगवद्गोस्वामी. Substance, country-made paper, 11 × 4 inches. Folia, 46. Lines, 9 on a page. Extent, 1,150 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura Candrakoṇā Mohanta Bharata Rāmānuja Dāsa. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** नारायणं परं धाम नौमि बोधसुखाश्रये ।

यन्नामार्क्कोदयो हन्ति मायामोहतमस्विनीम् ॥

प्रातः प्रबुध्य गुरुं देवञ्च नमस्कृत्य बद्धाञ्जलिपुटेनोत्थाय स्वस्तिकाद्यासनेनो-
पविश्य ... ब्रह्मरन्ध्रस्थं ज्योतिर्मयं देवं ध्यात्वा .... आवश्यकं निर्वर्त्य
शौचं दन्तधावनं च कृत्वा मूलमन्त्रेण मुखं प्रक्षाल्याचम्य मन्त्राभिषेकपूतदेहः
देवनिर्माल्यमपाकृत्य पुष्पादिना अभ्यर्च्य स्नायात् ॥ इत्यादि ।

**End.** अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्व्वमुपोषितः ॥
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ।
ग्रासादिमोक्षपर्य्यन्तं जपेन्मन्त्रं समाहितः ॥
अनन्तरं तद्दशांशं क्रमाद् होमादिकं चरेत् ।
तदन्ते मन्त्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ॥
ततश्च मन्त्रसिद्धिः स्यात् देवता च प्रसीदति ।
अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ॥
पुरश्चरणहीनोऽपि मन्त्री सिध्येन्न संशयः ।
एवं साधितमन्त्रस्तु काम्यकर्म्माण्यथाचरेदिति ॥

**Colophon.** इति श्रीभगवद्गोस्वामिकृता नारायणार्च्चारत्नमाला समाप्ता ॥ शुभमस्तु ॥

**विषयः।** प्रातःकृत्यनिरूपणम् । वासुदेवपूजानिरूपणम् । नारायणबीजादिनिरूपणम् । नारायणपूजाविधिः । दशाक्षराद्युपासनाभेदनिरूपणम् । मन्त्रसिद्धिप्रकारकथनम् । मन्त्रसिद्धौ पुरश्चरणस्यावश्यकताकीर्त्तनम् । पुरश्चरणमकृत्वापि मन्त्रसिद्धिर्भवितुमर्हतीति कथनञ्च ॥

---

**No. 115.** नृसिंहपूर्व्वतापनीयोपनिषद्दीपिका . ( षट्चक्रोपनिषद्दीपिकासहिता ) By नारायणः . Substance, country-made paper, 13 × 7 inches. Folia, 33. Lines, 12 on a page. Extent, 500 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः । ॐ श्रीगुरवे नमः ।
ॐ नृसिंहतापनी पूर्व्वपक्षोपनिषदुच्यते ।
षडङ्गानि सप्त चत्वारि चैकं त्रीणि च त्रीणि च ॥
सप्तात्मकः परस्परोऽनादिरनन्त इत्युक्तमद्वैतप्रकरणे स च स्वशक्त्या जगत्
तनोति धर्म्माधर्म्मौ चान्योन्यप्रतियोगिनावाश्रयमाणो राजेव भद्रो विलोक

यितुं निर्मिमीते तदधिकारिणश्च स्वमायाकल्पितान्यशांशिनो जीवानावि-
ष्करोति तेषु च धर्म्माधर्म्मानुसारेणानुग्रहनिग्रहावातनोति तत्र यदा
केचिदधर्म्माः स्वकृतधर्म्माधर्म्मव्यवस्थाभङ्गाय प्रवर्त्तन्ते तान्निग्रहीतुं स्वयमदेहो-
ऽपि देहवान् इवाभाति तदावतीर्णं इत्युच्यते । तेऽप्यवतारा भगवदीच्छा-
नुरोधेन चतुर्विधाः गुणावतारा: पूर्णावतारा: कल्पावतारा: अंशावतारा-
श्चेति तत्र गुणावतारा यथा. चतुर्मुख-त्रिनयन-चतुर्भुजादयः ते ह्येकैकं
गुणप्रधानत्वाद्गुणावतारा इत्युच्यन्ते पूर्णावतारा यथा नारसिंह-दाशरथि-
देवकीपुत्रादयः ते हि गुणसाम्येन सकलभागवतैश्वर्य्यपूर्णत्वात् पूर्णावतारा
उच्यन्ते। कल्पावतारा यथा नरनारायण-कपिल-व्यासादयः ते ह्येकैक-
कार्य्यार्थमेकैकमैश्वर्य्यमाविर्भावयन्तः कल्पावतारा इत्युच्यन्ते। अंशावतारा
यथा कार्त्तवीर्य्यार्जुन-नारद-भरत-पाण्डवेयार्जुनप्रभृतयः तेषु ह्यस्ति जीवांशो-
ऽंशेन च पारमेश्वरांशः उभयथा (स्वान्त अपारन्तर्भ्यां ?) कार्य्यदर्शनात् तत्र
पन्ने तत्त्वं वेदान्तैकपदेश्यं तद्व्यवस्थाद्वययुक्तं निर्व्यापारञ्च तत्र निर्व्यापारं
निर्गुणं स्वरूपज्ञानेनापवर्गदं सव्यापारं सगुणन्तु स्वानुग्रहेण तेनोभयमपि
ज्ञेयं ध्येयमुपास्यञ्चेति परमकारुणिको वेदः शान्तं रूपमुद्दिश्य सानुग्रहं
तूपदेष्टुं प्रवृत्तः। प्रथमं तावत् मायामात्रोपादानं भौतिकं प्रातिभासिके
स्वेच्छामयं स्वरूपानतिरिक्तं वस्तुतो गन्धर्व्वनगरीसमनीश्वरोचितं नारसिंहं
स्वरूपं मन्त्रतोऽर्थतश्च निर्णेतुमारभमाणो जगन्मङ्गलस्य भगवतो भजने प्रत्यू-
हनिरासार्थमाम्नीरूपमङ्गलमाचरति ॐ भद्रं कर्णेभिः शृणुयाम इत्यादि ।

End. तापनीयोक्तस्तु पञ्चाङ्गन्यासपक्षोऽनेन वा ध्यानेनापि विकल्प्यतेऽधिकफलार्थ-
त्वात् —

नारायणेन रचिता श्रुतिमात्रोपजीविना ।
अस्पष्टपदवाक्यानां षट्चक्रस्य प्रदीपिका ॥

Colophon. इति षट्चक्रोपनिषद्दीपिका समाप्ता ॥

नृसिंहोत्तरतापन्यां त्रिंशत्यां स्युः खण्डका नव ।
नृहरेः परमं रूपं प्रणवेनात्र गीयते ॥

पूर्व्वतापन्यनुष्टुप् त्रिष्टुप् तापरा उत्तरा प्रणवद्वारा नारसिंहं रूपं निर्णेतु-
मारभ्यते तथापि मङ्गलार्थं भद्रमित्यादि शान्तिः शान्तिः शान्तिः पाठः ॥ * ॥

विषयः। नृसिंहपूर्व्वतापनीयोपनिषद्व्याख्यानम् । षट्चक्रोपनिषद्व्याख्यानञ्च ।

**No. 116.** नैमिषारण्यमाहात्म्यम् (स्कन्दपुराणीयं) । Substance, country-made paper, 8 × 4 inches. Folia, 47. Lines, 9 on a page. Extent, 650 çlokas. Character, Nāgara. Date, Sm. 1908. Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः । ॐ नमः पुरुषोत्तमाय ॥
पुरा कृतयुगे चैव ऋषयः शौनकादयः ।
नैमिषारण्यमागत्य तप उग्रं चकार सः ॥ (?)
अयोध्यानगरे रम्ये रघुवंशः पृथिवीपते ।
सरोजवदना भार्य्या सत्यरूपा पतिव्रता ।
राज्ञा वशिष्ठमाश्रय ऋषीणां सर्व्वमागता ॥ (?) इत्यादि

**End.** व्रतोपवासो द्वादश्यां ततः पूर्व्वन्तु पारणम् ।
त्रयोदश्यां चतुर्दश्यां पौर्णमास्यान्तु या वसेत् ॥
सर्व्वपापविनिर्म्मुक्ता विष्णुलोकं स गच्छति ॥

**Colophon.** इति श्रीस्कन्दपुराणे नैमिषारण्यमाहात्म्ये उमामहेश्वरसंवादे मिश्रित-माहात्म्यं पञ्चदशदिनवासः × × × × षोड़शोऽध्यायः ॥ संवत् १९०८

**विषयः ।** १ अध्याये, उमामहेश्वरसंवादेन मूलप्रकृतिनिरूपणम् । २ ये, चक्रतीर्थ-माहात्म्यादिकथनम् । ३ ये, तीर्थयात्राविध्यादिः । ४ र्थे, द्वितीयादिप्रवासफलादिकथनम् । ५ मे, तृतीयादिप्रवासफलकथनम् । ६ ष्ठे, चतुर्थ्यादिप्रवासफलादिकथनम् । ७ मे, षष्ठदिवसादि-प्रवासफलादिकथनम् । ८ मे, सप्तमदिवसादिप्रवासफलादिकथनम् । ९ मे, अष्टमदिवसप्रवास-फलकथनम् । १० मे, नवमदिवसप्रवासफलकथनम् । ११ शे, ब्रह्मावर्त्तमाहात्म्यकथनम् । १२ शे, पुष्करमाहात्म्यकथनम् । १३ शे, पंचप्रयागमाहात्म्यकथनम् । १४ शे, मूलभेदमाहात्म्यकथनम् । १५ शे, शाखिनीमाहात्म्यम् । १६ शे मिश्रितमाहात्म्यकथनञ्चेति ॥

---

**No. 117.** न्यायदीपिका . By रामकृष्णातर्कावतंसभट्टाचार्य्यः . Substance, country-made paper, 16 × 2½ inches. Folia, 10. Lines, 6 on a page. Extent, 225 çlokas. Character, Bengali. Date, Sk. 1737. Place of deposit, District Medinīpura, Post Office Rādhānagara, Amarapura, Paṇḍita Guruprasanna Vidyāratna. Appearance, tolerable. Prose. Corıect.

**Beginning.** प्रणम्य परमात्मानं सदानन्दं ततो गुरुम् ।
न्यायशास्त्रं करोम्यर्थे ईश्वरज्ञानहेतवे ॥

अथ वागीश्वरं नत्वा आचार्य्यं पितरं तथा ।
तर्कावतंसः श्रीरामकृष्णः × × × दीपिकाम् ॥

तत्र त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा च । उद्देशश्च नाममात्रेण कीर्त्तनम् । लक्षणन्त्वसाधारणो धर्म्मः । लक्षितस्य लक्षणमुपपद्यते नवेति विचारः परीक्षा । भावकार्य्यस्य त्रीणि कारणानि भवन्ति । समवायिकारणं असमवायिकारणं निमित्तकारणञ्च । आद्यं यत्समवेतं कार्य्यमुत्पद्यते तत् । द्वितीयन्तु समवायिकारणप्रत्यासन्नत्वे सति कारणम् । तृतीयन्तु एतदुभयभिन्नकारणम् । इत्यादि ॥

**End.** अतएव सर्व्वधियां सामर्थ्यमिति । अत्र नैयायिकाः ननु विशिष्टबुद्धि-विशेषणसाध्या बुद्धित्वात् दण्डीति बुद्धिवत् प्रत्येकज्ञानस्य कारणत्वे उभयवत्त्वानभिज्ञपरादनुमित्यापत्तेः । वह्निव्याप्यो धूमः आलोकः पर्व्वतवृत्तिरित्यादेः । अतो विशिष्टज्ञानस्यैव कारणत्वं न तु ज्ञानद्वयस्य अतएव ख्यातौ व्यधिकरणप्रकारकत्वमिति । इति षोडशपरिच्छेदः ।

**Colophon.** इति श्रीरामकृष्णतर्कावतंसभट्टाचार्य्यविरचिता न्यायदीपिका समाप्ता ।
श्रीआनन्दरामदेवशर्म्मणो लिपिरियं पुस्तिका च । शुभमस्तु शकाब्दाः १७१७ ।

विषयः । उद्देशलक्षणपरीक्षात्मकत्रिविधशास्त्रप्रवृत्तिनिरूपणम् । समवायिप्रभृतित्रिविधकारणनिरूपणम् । प्रमाणप्रमेयादिषोडशपदार्थनिरूपणम् । षडिन्द्रियनिरूपणम् । उपमाननिरूपणम् । शब्दनिरूपणम् । मङ्गलवादः । प्रामाण्यवादश्चेति ॥

---

**No. 118.** न्यायसूत्रम् वा न्यायसूत्रोद्धारः. By वाचस्पतिमिश्रः. Substance, country-made paper, 18 × $3\frac{1}{2}$ inches. Folia, 5. Lines, 10 on a page. Extent, 130 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinīpura, Post Office Khaḍāra, Kurāna, Paṇḍita Ambikācaraṇa Vidyāsāgara. Appearance, new. Prose. Correct.

**Beginning.** ॐ काली जयति ।
श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।
लिख्यते मुनिमूर्द्धन्य-श्रीगौतममतं महत् ॥
प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।
दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः । प्रत्य-

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम-व्यभिचारि व्यवसायात्मकं प्रत्यक्षं अथ तत्पूर्व्वकमनुमानं त्रिविधं पूर्व्ववत् शेषवत् सामान्यतो दृष्टञ्च । इत्यादि ।

E. स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा निग्रहस्थानप्राप्तस्या-निग्रहः पर्य्यनुयोज्योपेक्षणं अनिग्रहस्थाने निग्रहस्थानानुयोगे निरनुयो-ज्यानुयोगः । सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः । हेत्वा-भासाश्च यथोक्ताः ।

Colophon. इति न्यायसूत्रोद्धारे पञ्चमाध्यायस्य द्वितीयमाह्निकम् । निग्रहस्थानविशेष लक्षणं नाम समाप्तः पञ्चमाध्यायोऽपि ॥
शिवेनोरसि विष्टतौ पादौ कलापवर्गदौ ।
बलेभ्यि न्यायसूत्राख्यं वैनवक्षिवासरे ॥

विषयः । प्रमाण-प्रमेय-संशय प्रयोजन-दृष्टान्त-अवयव-सिद्धान्त-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां निःश्रेयसकारणानां निरूपणम् ।

---

**No. 119.** न्यासतिलकम् (सटीकम्). By वेङ्कटनाथः. Substance, country-made paper, $12 \times 5\frac{1}{2}$ inches. Folia, 17. Lines, 10 on a page. Extent, 400 çlokas. Character, Nāgara. Date, Sṃ. 1879. Place of deposit, District Medinīpura, Candrakoṇā, Mohanta Bharata Rāmānuja Dāsa. Appearance, new. Verse and prose. Correct.

Beginning. गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥
प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् ।
हस्तः श्रीरङ्गभर्त्तुर्मामव्यादभय + + + ॥
अनादेर्निस्तीर्णो दुरितजलधेर्यन्निरपरं
विदुः प्रायश्चित्तं यदु-रघु-धुरीणाशयविदम् ।
तदारम्भे तस्या गिरमवदधानेन मनसा
प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥
महेन्द्राग्निविष्णुप्रभृतिषु महत्त्वप्रभृतिवत्
प्रपत्त्ये तत्त्वे परिमितवैशिष्ट्यविभवाम् ।
अपश्यन्तं स्वात्ना कमितुरधिगम्यत्वजननीं
श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ इत्यादि

टीकायाः प्रारम्भवाक्यम् । श्रीमते ।
श्रीमान् वेङ्कटनाथार्य्यः कवितार्किककेसरी ।
वेदान्ताचार्य्यवर्य्यो मे सन्निधत्तां सदा हृदि ॥
वाधूल श्रीनिवासार्य्यप्राप्तवेदान्तसम्पदम् ।
लक्ष्मणार्य्यदयापात्रं श्रीनिवाससुतं भजे ॥ इत्यादि ।

**End.** आचार्य्याज्ञाधुर्य्यद्वयसमधिगमे सम्भवन्तं तदाज्ञे
विश्लिष्टाश्लिष्टपूर्व्वोत्तरदुरितभरं यापितारब्धदेहम् ।
नीतं मत्कैस्वया वा निरवधिकदयोद्भूतबोधादिरूपं
मद्भोगैकसभोगं द्वयितमनुचरं मत्कृते मां कुरुष्व ॥
विधानं रङ्गेशादधिगतवतो वेङ्कटकवेः
स्फुरद्भावं वक्ते परिकलयतां न्यासतिलकम् ।
इहानुचार्य्येण प्रथनजनचिन्तामणिगिरिः
सपर्य्याङ्के येषां दिशति कविपर्य्यङ्करसिकः ॥ इति ॥
टीकायाः शेषवाक्यम् ।
वेदान्ताचार्य्यपद्यानां भावं को वक्तुमर्हति ।
तथापि मत्कृतिव्याख्यामकार्षं मत्प्रसादतः ॥
श्रीमद्-वेङ्कटनाथार्य्य-करुणापरिणामतः ।
श्रीन्यासतिलकव्याख्या कृता सद्भिर्विशोध्यताम् ॥
वेदान्ताचार्य्यसन्दर्भव्याख्याने कृतचापलम् ।
क्षमध्वं मां क्षमासारा विदुषामपि दुष्करे ॥
श्रीभाष्यश्रीनिवासेन कौशिकान्वयशोभिना ।
कृतेयं न्यासतिलकव्याख्या पाठ्या विचक्षणैः ॥

**Colophon.** इति श्रीन्यासतिलकव्याख्यानं समाप्तम् । शुभमस्तु श्रीरस्तु । श्रीशुभ-संवत् १८७९ ।

**विषयः ।** श्री-श्रीकृष्ण-रङ्गनाथादिदेवतास्तवः ।

---

**No. 120.** **पञ्चवटीमाहात्म्यम् . (पद्मपुराणीयम्) .** Substance, country-made paper, 12×9 inches. Folia, 49. Lines, 9 on a page. Extent, 800 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । श्रीसीतारामचन्द्राय नमः ॥

जटाजौर्घारध्वान्तरगतसरित्तीरनिनदत्-
भुजगश्रेणीकोलाहलविगतनिद्रा भगवती ।
पिधाय स्वौ कर्णौ स्वपिति तु यदा तत्कुचयुगं
निजानन्दः शम्भुः स्पृशति सुखहेतुर्भवतु नः ॥

जैमिनिरुवाच ।

कलौ युगे पापमयी धरित्री
धर्मो गतः सर्व्वजनात् पृथिव्याः ।
वर्णाश्रमा नैव वसन्ति तस्यां
दिवौकसः क्वापि गता मुनीन्द्राः ॥
तस्मिन् कलियुगे घोरे क गन्तव्यं द्विजातिभिः ॥

मार्कण्डेय उवाच ।

साधु साधु महाभाग बुद्धिमानसि वै मुने ।
यत् पृष्टं भवता सर्व्वं तव लोकहिताय च ॥
क्षेत्रं परं पञ्चवटीति नाम्ना
गोदातटे ख्यातिमुपैष्यतीति ।
भुक्तिञ्च मुक्तिं लभतां नराणां
नारायणीयं प्रतिदास्यति यम् ॥ (?)
... ... ... ... पुंसां
रामस्य नामस्मरणेन चाप ॥
क्षेत्राणि यानि जगतीतलसंस्थितानि
मुक्तिप्रदानि कथितानि महामुनीन्द्रैः ।
तेषामसौ पञ्चवटी कृपालो
रामस्य पादरजसाभिलता भवन्ताम् ॥ इत्यादि ।

**End.** तेषां मुक्तिफलं करस्थितमिति श्रेयं बुधैर्निश्चयात् ।
श्रीरामस्य दयानिधेर्यदि कृपा जायेत किं दुर्लभम् ॥

**Colophon.** इति श्रीपद्मपुराणे नासिकपञ्चवटीमाहात्म्ये भवि[illegible]-
ध्यायः । श्रीसीतारामार्पणमस्तु ।

**विषयः ।** पञ्चवटीनामकक्षेत्रस्य माहात्म्यकीर्त्तनम् ॥

**No. 121.** **पञ्चीकरणवार्त्तिकाभरणम्** . Substance, country-made paper, 12×3 inches. Folia, 12. Lines, 10 on a page. Extent, 280 çlokas. Character, Nāgara. Date, ? Place of deposit, Benaras, Gurusvāmi Maṭha. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगुरवे नमः । इह खलु परमेश्वराराधनार्थमनुष्ठितैरित्यादिकर्म्मभिः परिशुद्धान्तःकरणानां अतएव नित्यानित्यवस्तुविवेको हृचार्थभोगविराग-शमादि-साधनसम्पत्-मुमुक्षुत्वाख्य ... ... ... ... ।

**End.** श्रवणमननस्यैव निदिध्यासनोऽधिकारादिति ।

**Colophon.** इति पञ्चीकरणवार्त्तिकाभरणं समाप्तम् ।

**विषयः ।** पञ्चीकरणवार्त्तिकस्य व्याख्यानम् ।

---

**No. 122.** **पञ्चीकरणविवरणटीका ( तत्त्वचन्द्रिका )** . Substance, country-made paper, 12×3 inches. Folia, 12. Lines, 9 on a page. Extent, 532 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Gurusvāmi Maṭha. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः परमात्मने श्रीगुरवे ।
यन्नामरूपजगदुद्भवसम्प्रतिष्ठा
संकोचकारणमनिर्व्वचनीयशक्ति ।
सच्चित्सुखाद्वयवपुर्जगतो हिताय
रामाभिधामुपगतं भुवि तं नमामि ॥ इत्यादि ।

**End.** सीता-सुवर्णलतिका-परिवीतगात्रं
प्रेमरसार्द्रचरणं सुखमुत्पलाक्षम् । (?)
कीर्त्तिप्रसूनपरिशान्ति + सर्व्वलोकं
रामाभिधं जगति कल्पतरुं नमामि ॥

**Colophon.** इति श्रीपञ्चीकरणविवरणटीका तत्त्वचन्द्रिका नाम परिसमाप्ता । महाश्रीमन्महामुनि-श्रीसदाशिवानन्दतीर्थस्वामिपूज्यपादशिष्य-श्रीरामब्रह्मानन्दतीर्थस्येयम् ॥

**विषयः ।** पञ्चीकरणविवरणस्य व्याख्यानम् ।

---

**No. 123.** **पञ्जीवाक्यप्रबोधः (कातन्त्रस्य, खण्डितः).** By **नरहरिशर्म्मा**

Substance, palm-leaf, $20\frac{1}{2} \times 1\frac{1}{2}$ inches. Folia, 47. Lines, 4 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Kāligañja, Parganā Bhāyoāl grāma Dakṣiṇa-bhāga, Paṇḍita Rakṣākara Nyāyapañcānana. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः शिवाय ॥ श्रीधातुः ॥

श्रीयुतकृष्णपदाम्बुजयुगलं मम चित्तमत्तरोलम्बः ।

धीमकरन्द ... ... ... इन्दिराश्रयं विशतु ॥

श्रीधातुः ॥

धातुविभक्तिवर्ज्जमिति, ननु वर्ज्जनं परित्यागः । न हि अर्थवत्तायां धातुविभक्तिपरित्यागः सम्भवति तयोरप्यर्थवत्त्वात् । किन्तर्हि लिङ्गसंज्ञाप्राप्तिकाले, ततश्च निषेधस्य प्राप्तिपूर्व्वकत्वात् अर्थवल्लिङ्गं धातुविभक्तिवर्ज्जमिति निर्द्देशो युज्यते । सत्यं लिङ्गसंज्ञाप्राप्तिदशायां धातुविभक्ती वर्ज्जयिष्यतीति कृत्वा तत्पूर्व्वदशायामपि योग्यतया धातुविभक्तिवर्ज्जमित्युच्यते क्रियायोग्यतयैव कृदन्तप्रयोगात् । यथा अपचन्नपि सूपकारः पाचनयोग्यतया पाचक उच्यते इति केचित् । वर्ज्जनशब्दोऽत्यन्ताभाववचनोऽन्योन्याभाववचनश्च । तत्र नाद्यः धातुविभक्त्योरत्यन्ताभावो धातुविभक्त्योरपि वर्त्तते, ततश्च धातुविभक्त्योरपि लिङ्गसंज्ञा स्यात् वर्ज्जनस्य वैयर्थ्यं स्यात् । द्वितीयस्तु सम्भवत्येव । तथाहि धातुविभक्त्योरन्योन्याभाववद् यदर्थवत्तल्लिङ्गमिति । अत्यन्ताभावोऽपि घटते । तथाहि जातिरेव पदार्थ इति मते धातुविभक्तिशब्देन धातुत्वविभक्तित्वमुच्यते, ततश्च धातुत्वविभक्तित्वात्यन्ताभाववद्यदर्थवत्तल्लिङ्गमिति न दोषः ।

**End.** अन्ये तु प्रत्ययग्रहणाभावे ककार इति क्रियतां कृत्कारग्रहणस्य व्याप्त्यर्थत्वात् सामान्येऽकारे भविष्यतीत्याहुः अपरे तु कृद्ग्रहणसामर्थ्यादेव सामान्यककारोपलब्धिः अन्यथा स्त्रियामाकार इति कृते अकयोरनुवर्त्तनात् पुत्रकाम्य इत्यत्र सर्वथैव न स्यादिति दिक् ॥

**Colophon.** इति श्रीनरहरिशर्म्मविरचिते पञ्जीवाक्यप्रबोधे नामप्रकरणे द्वितीयः पादः ।

**विषयः ।** वादार्थरीतिमाश्रित्य यथासम्भवं त्रिलोचनदासकृत-कातन्त्रवृत्तिपञ्जिकाया व्याख्यानम् । अश्रुतपूर्व्वोऽयं ग्रन्थः छात्राणामतीवोपयोगी । सन्धिप्रकरणस्य तु व्याख्यानमनेन न कृतमित्यनुमीयते ।

---

**No. 124.** पदार्थखण्डनटीका. By रुद्रन्यायवाचस्पतिः. Substance, country-made paper, 11 × 5 inches. Folia, 15. Lines, 8 on a page. Extent, 360 çlokas. Character, Bengali. Date, Sk. 1547. Place of deposit, District Pharidpura, Kotālipāḍā, Unasiyā grāma, Paṇḍita Dvārikānātha Nyāyapañcānana. Appearance, old. Prose. Correct.

**Beginning.** ॐ नम इत्यादिश्लोकव्याख्या अस्मदीयानुमानदीधितिपरीक्षायां द्रष्टव्या । तत्र तेषु मध्ये दिक्कालौ दिक्कालपदवाच्यौ । इत्यादि ॥

**End.** तत्तत्प्रकारतातिरिक्तप्रकारतासम्बन्धस्यैव कार्य्यतावच्छेदकत्वात् ।

**Colophon.** इति रुद्रन्यायवाचस्पतिभट्टाचार्य्यविरचिता पदार्थखण्डनव्याख्या समाप्ता ।

**विषयः ।** रघुनाथशिरोमणिकृतस्य पदार्थखण्डननामकस्य न्यायग्रन्थस्य टीका ।

---

**No. 125.** परमहंसपञ्चाङ्गम् (रुद्रयामलीयम्). Substance, country-made paper, 7 × 4 inches. Folia, 89. Lines, 6 on a page. Extent, 500 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । श्रीभैरव उवाच ।
ॐ त्वत्सेवयास्मि तुष्टोऽहं वरं वरय सुव्रते ।
यत्किञ्चित् प्रार्थसे देवि तत्ते सर्व्वं ददाम्यहम् ॥
श्रीदेव्युवाच ।
सन्तुष्टो देवदेवो मे वरयोग्यास्म्यहं यदि ।
तदा मे ब्रूहि पञ्चाङ्गं परमहंसस्य दैवतम् ॥ इत्यादि ।

**End.** इदं परमतत्त्वं हि सारभूतञ्च पावनम् ।
परमहंसस्य देवस्य स्तवराजं स्तवोत्तमम् ॥
सदा गुह्यं सदा गोप्यं गोप्तव्यञ्च सदा प्रिये ।
राज्यं देयं शिरो देवि न देयं मे महेश्वरि ॥
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा नरकमाप्नुयात् ।
विना शिष्याय यो दद्याद् यस्य कस्यापि कर्हिचित् ॥
दुर्जनेभ्यः सदा गोप्यं गोप्तव्यं सर्व्वथा प्रिये ॥

**Colophon.** इतिश्रीरुद्रयामले तन्त्रे परमहंसस्तोत्रं समाप्तम् ।

**विषयः ।** परमहंसस्य चक्रयामलोय-पटल-पद्धति-सहस्रनाम-कवच-स्तोत्रात्मकपञ्चाङ्गस्य कथनम् ।

---

**No. 126.** पुरश्चरणचन्द्रिका. Substance, country-made paper, 13×4 inches. Folia, 44. Lines, 7 on a page. Extent, 600 çlokas. Character, Bengali. Date, Sk. 1738. Place of ḍeposit, District Ḍhākā, Roāil grāma, Bābu Yogīndra Mohana Rāya. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमः शम्भवे ।

अथातश्च प्रवक्ष्यामि पौरश्चारणिकं विधिम् ।
येन विना न सिद्धः स्यान्मन्त्रः कल्पशतैरपि ॥
जीवहीनो यथा देही सर्व्वकर्म्मसु चाक्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥ इत्यादि ।

**End.** श्रोत्रयोर्वक्षसि प्रोक्ता नासा न्यसेच्च स्तके ।
अथ कर्पूरयोर्नाभौ मूलविद्याञ्च विन्यसेत् ॥ * ॥

**Colophon.** इति पुरश्चरणचन्द्रिका समाप्ता ॥ शाके वस्वग्निमुनीन्दुमे लेखयामास )

**विषयः ।** पुरश्चरणलक्षणादिनिरूपणम् । पुरश्चरणविधिः । नैमित्तिकपुरश्चरणनिरूपणम् । पञ्चपुरश्चरणादिनिरूपणम् । मन्त्रप्रबोधशान्तादिकथनञ्चेति ।

---

**No. 127.** पुरश्चरणदीपिका. By चन्द्रशेखरः. Substance, country-made paper, 14×3 inches. Folia, 41. Lines, 6 on a page. Extent, 950 çlokas. Character, Bengali. Date, Sk. 1656. Place of deposit, District Barisāla, Mānapāsā, Paṇḍita Mathurānātha Bhaṭṭācāryya. Appearance, old. Prose. Correct.

**Beginning.** नमो गणेशाय ।

इन्दीवरनिभं श्यामं पुण्डरीकदलेक्षणम् ।
गोपीनां हृदयानन्दं तं वन्दे यदुनन्दनम् ॥
श्रीचन्द्रशेखरो विप्रः सम्प्रदायक्रमान्वितः ।
नानागुरुमतं ज्ञात्वा सङ्कुरुते मतं शुभम् ॥

नत्वोति सर्व्वमन्त्राणां पुरश्चरणदीपिकाम् ।
धर्म्मार्थकाममोक्षेषु शास्त्रमार्गेषु योजनम् ॥
सिद्धमन्त्रस्य प्रोक्तो हि विनियोगो विचक्षणैः ।
पुरश्चरणपूर्व्वोऽसौ विनियोगो मनोर्मतः ॥ इत्यादि ।

**End.** ... ... यः कृष्णं पश्यति चक्षुषा ।
जीवन्मुक्तो भवेन्मन्त्री सत्यं सत्यं मयोदितम् ॥
कविशितिमिरश्वरा निर्म्मिता दीपिकेयम् ।
वर्षे द्वादशसंयुक्ते दशपञ्चशते गते ॥

**Colophon.** इति चन्द्रशेखरविरचितायां पुरश्चरणदीपिकायां पञ्चमः प्रकाशः समाप्तः ।
समाप्तोऽयं ग्रन्थः ॥ ऋतुबाणतिथौ शाके ... ... ... ।

**विषयः ।** सर्व्वमन्त्राणां पुरश्चरणविध्यादिः ॥

---

**No. 128. पुरश्चरणोल्लासहरीतन्त्रम्.** Substance, country-made paper, 14 × 3 inches. Folia, 7. Lines, 5 on a page. Extent, 125 çlokas. Character, Bengali. Date, ? Place of deposit, District Rājasāhi, Post Office Pākuḍā, Keḍā grāma, Paṇḍita Kālidāsa Ṭhākura. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगुरवे नमः । श्रीसुभगा उवाच ।
पूजाख्येकं महाभाग नारद ब्रह्मनन्दन ।
शिष्यस्त्वं शिवदेवस्य पार्व्वत्याश्च महापते ॥
एकोच्चारणमात्रेण सर्व्वसिद्धीश्वरो भवेत् ।
किं तस्य पुरश्चरणं देव कथं वा क्रियते वद ॥ इत्यादि ।

**End.** डाकिनीषु न सिद्धेत शाकिनीपुटितं जपेत् ।
तदा सिद्धो भवेद्विप्र नात्र कार्य्या विचारणा ॥

**Colophon.** इति पुरश्चरणोल्लासहरीतन्त्रे पञ्चमः पटलः ॥ * ॥

**विषयः ।** १ मे पटले नारदसुभगासम्वादमुखेन प्रातःकृत्यादिनिरूपणम् । २ ये पञ्चाक्षरोच्चारणफलादिनिरूपणम् । ३ ये वर्णपूजनविध्यादिः । ४ र्थे जपविध्यादिः । ५ मे पुरश्चरणान्ते कर्त्तव्यादिकथनञ्च ।

---

**No. 129.** प्रपञ्चसारः. By शङ्कराचार्य्यः. Substance, country-made paper, 8 × 3½ inches. Folia, 2. Lines, 13 on a page. Extent, 68 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ व्यवस्थिते स्वेवं मासात् पक्षात् दिनादपि ।
मूर्द्धनोन्नाडिकायाश्च क्षणादपि च वर्द्धते ॥
जन्तुः षडङ्गी पूर्व्वं स्याच्छिरः पादौ करौ तथा ।
अन्तराधिश्चेति पुनः षडङ्गेषु प्रवर्त्तते ॥ इत्यादि ।

**End.** सौषुम्नवर्त्म सुधियोदित नादसङ्गात्
पञ्चाशदीरयति पंक्तिश एव वर्णान् ।

**Colophon.** इति श्रीमच्छङ्कराचार्य्यकृते प्रपञ्चसारे द्वितीयः पटलः ॥ * ॥

**विषयः ।** उदरमध्यस्थशिशोरवस्थावर्णनम् ॥

---

**No. 130.** प्रपञ्चसारः. Substance, country-made paper, 13 × 6 inches. Folia, 167. Lines, 9 on a page. Extent 2,800 çlokas. Character, Nāgara. Date, ? Place of deposit, Hātuā, Bābu Girīndranātha Datta. Appearance, new. Verse. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः ।

अ क च ट त प याद्यैः सप्तभिर्वर्णवर्गै-
र्विरचितमुखबाहा पादमध्याख्यवत्का (?) ।
सकलजगदधीशा शाश्वता विश्वयोनि-
र्वितरतु परिशुद्धिं चेतसः शारदा नः ॥
अथाभवन् ब्रह्महरीश्वराख्याः
पुरा प्रधानात् प्रलयावसाने ।
गुणप्रभिन्ना जगतोऽस्य सृष्टि-
स्थिति-क्षये स्वाहमितिप्रचेष्टाः ॥
स्वनिष्पत्तिं च हत्यच्च ते विचिन्त्य समाविदन् ।
अकारमजमव्यक्तमरूपं शायिनं विभुम् ॥
सुप्ताभासेन दुग्धाब्धौ कथमक्षसमाकुले (?) ।
मनत्यंबन्धोत्कीर्णसखरीकमणीतले ॥

उद्यदादित्यकिरणप्रभान्तश्शिरोदये ।
पूर्णचन्द्रकरामर्शप्रतिबुद्धजलाशये ॥
अनन्तभोगे विमले फणायुतविराजिते ।
शायिनं शार्ङ्गिणं शौरिं ... ... ... ।
तुष्टुवुर्हृष्टमनसो विष्टर ... विभुम् ॥
इति पृष्टो हरिसेन सरोजोदययोनिना ।
सूत्रार्थमर्थविज्ञप्तौ विज्ञते विज्ञतीरपि ॥ इत्यादि ॥

End.

इत्याचारयुतः सम्यगाचार्य्यं यः समर्चयेत् ।
कृतकृत्यः स वै शिष्यः परत्रेह च ... ... ॥
देवान्मुनीनपि पितॄनतिथींस्तथाग्नीन्
नित्योदितेन मनसा ... ... ऽर्चयेद् यः ।
इष्टानवाप्य सकलानिह भोगजातान्
प्रेत्यापि याति परमं पदमादिपुंसः ॥
यदाश्रया हि प्रकृतिः प्रभावती
विभिन्ननारादिसमुत्थितो यशः । (?)
जगन्ति पुंस ... रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ॥

Colophon. इति श्रीप्रपञ्चसारे षट्त्रिंशत्तमः पटलः ॥ ३६ ॥ समाप्तोऽयं प्रपञ्चसार-ग्रन्थः । शुभम् ।

**विषयः ।** सूक्ष्मक्रियादीनां प्रकृतिनिरूपणम् । शिरःपादादिभिः षडङ्गैः पूर्णस्य जन्तो-र्बहिरभ्यन्तरवृत्तिनिरूपणम् । अग्निसोमयोर्भेदतः षोडशसंख्यात्मकवर्णविभागनिरूपणम् । वर्णानां बीजस्वरूपनिरूपणम् । विधिविहितमन्त्राणां दीक्षाविधानम् । दीक्षापश्चान्नियमः । अक्षर-देवतानां नामकीर्तनपुरःसरं प्रवरादिकीर्तनम् । प्राणाग्निहोत्रविधानम् । सकलप्रपञ्चमूला-त्मिकायाः प्रकृतेः सजपाभिषेकाहुतार्चनाद्यङ्गमन्त्रविधानम् । त्रिपुराभिधविद्यानिरूपणम् । सर्वाङ्गभेदजपार्चनाहुतक्रमैः श्रियोमन्त्रविधिः । दुर्गायाः साङ्गजपार्चनाहुतविधिः । चतुरक्षर-संज्ञकमन्त्रविधानम् । चन्द्रमन्त्रकथनम् । मन्मथमन्त्रविधिः । षडक्षराख्यमन्त्रविधिः । नाम-भेदभिन्नमन्त्रादिविधानम् । श्रीकरनामधेयाष्टाक्षरमन्त्रविधिः । विष्णुपञ्जरनिरूपणम् । हरिषा-मूर्तिसंज्ञकमन्त्रविधिः । यन्त्रविरचनादिभिर्बहुप्रकारयुतानां मन्त्रविशेषाणां कथनम् । प्राण-प्रतिष्ठामनोर्विधानम् । स्नानयागकथनञ्चेति ।

---

**No. 131.** प्रमेयमाला. Substance, country-made paper, 10 × 5 inches. Folia, 13. Lines, 11 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Post Office Andāl Kājoḍā, Paṇḍita Yadunātha Bhaṭṭācāryya. Apprearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमः कृष्णाय । यत्तु भेदमिथ्यात्ववादिभिरुक्तं प्रमाणतः स्वरूपतश्च दुर्निरूपकत्वात् भेदो न सम्भवतीति । इत्यादि ।

**End.** उदाहृतश्रुतिस्मृतिविरोधात् पूर्व्वव्याख्यातृभिरुदाहृतत्वाच्च स्वकपोलकल्पितमिति द्रष्टव्यम् । अतश्चतुर्णामपि यतीनां उपवीतमवश्यम्भाव्यमिति सिद्धम् ॥

**Colophon.** इति प्रमेयमालायां यतिलिङ्गसमर्थने प्रथमः स्कन्धः ॥ ० ०

**विषयः ।** भेददूषणखण्डनम् । भावान्तराभावसमर्थनम् । अखण्डवाक्यार्थभङ्गः । विविधवस्तुपरिच्छेदराहित्यम् । सर्व्वशरीरत्वादिकथनम् । यतिलिङ्गसमर्थनञ्चेति ।

---

**No. 132.** प्रयोगदर्पणम्. Substance, country-made paper, 12 × 4 inches. Folia, 31 Lines, 11 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, Sk. 1740. Place of deposit, District Mānabhūma, Post Office Raghunāthapura, Vĕḍogrāma, Çrī Jagannātha Ācāryya Gosvāmī. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ श्रीहरिः ।

श्रीधरादस्मदाचार्य्यपर्य्यन्तान् प्रणमन् गुरून् ।

प्रयोगदर्पणं कुर्व्वे दृश्यते येन संस्फुटम् ॥

श्रीवैकुण्ठं गमिष्यन्तं पुत्रादयः शङ्खोदेवीः आपो वा इदं द्रुपदादिव आपो हिष्ठा मयोभुवः ऋतञ्चेतिः संस्नाप्य । इत्यादि ।

**End.** पित्रादीनां मात्रादीनां चाब्दिकं प्रत्याब्दिकं वा कृत्वा परेद्युः पित्रादीन् मात्रादींश्च तर्पयेत् । तीर्थश्राद्धे हिरण्यश्राद्धे च श्राद्धात् परं मध्याह्ने परेद्युः । * । एवं अश्वमेधादीनां प्रयोगो यथामति सीतारामप्रेरणया कृत स्तस्मादिदं प्रयोगदर्पणं सम्यग्वीक्ष्य यथानुक्तादिकञ्चादीन् धर्म्मशास्त्रप्रवीणाः सन्तः संशोधयन्तु । अनेन भगवान् प्रीतः सीतारामः सीतारामः ॥

**Colophon.** इति प्रयोगदर्पणे सप्तदशः खण्डः ॥ श्रीहरिः समाप्तश्चायं ग्रन्थः ॥ शकाब्दाः १७४० ॥

विषयः। १ मे खण्डे मुमुर्षुकर्त्तव्यादिनिरूपणम्। २ ये खण्डे प्रायश्चित्तादिनिरूपणम्। ३ ये खण्डे गर्भिण्यादिमरणे कर्त्तव्यविषयनिरूपणम्। ४ र्थे खण्डे प्रसूमेधप्रयोगादिः। ५ मे खण्डे प्रेतनिर्हरणप्रायश्चित्तादिनिरूपणम्। ६ ष्ठे खण्डे अनुमरणविशेषादिकथनम्। ७ मे खण्डे अस्थिसञ्चयनश्मशानाग्निनष्टसन्धानादिनिरूपणम्। ८ मे खण्डे दशाहकृत्यादिनिरूपणम्। ९ मे खण्डे एकादशाहकृत्यादिनिरूपणम्। १० मे खण्डे एकोद्दिष्टादिनिरूपणम्। ११ शे खण्डे सपिण्डीकरणादिनिरूपणम्। १२ शे खण्डे सपिण्डीकरणकालादिनिरूपणञ्चेति।

---

**No. 133.** प्रश्नदीपः. By काशीनाथः. Substance, country-made paper, $14\frac{1}{2} \times 3\frac{1}{4}$ inches. Folia, 14. Lines, 5 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Kāligañja grāma, Dakṣiṇabhāgā, Paṇḍita Rakṣākara Nyāyapañcānana. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ॥

तिमिराम्बुनिधौ मग्नं करैरुद्धृत्य यो जगत्।
प्रीणयत्यातुरं प्रीत्या तस्मै सर्व्वात्मने नमः ॥
मिहिरेऽस्तमुपायाते तम ... धरातले।
प्रश्नगेहे प्रदीपोऽयं काशीनाथकृतो बभौ ॥
लग्नेशादिकं भागं शत्रुमित्राष्टमादिकम्।
कार्य्यांशं ज्ञातकश्च प्रश्नं ब्रूयाद्विचक्षणः ॥
तत्प्रश्ने शुभस्वामी लग्नस्वामी च संस्थितः।
ररामौ तदा पुत्रः स्त्रीराशौ कन्यकोच्यते ॥
मे लग्ने समांशे च शनिः कन्याकरो भवेत्।
विषमे विषमांशे च लग्ने पुत्रः प्रमोदतः ॥
१० १५ ९
ततन्या नाम नक्षत्रं गतमासतिथौ प्रश्नाः।
४
इन्दुयुक्ताः सप्तभक्ताः पुत्रदोऽर्को गुरुः कुजः ॥
लग्नस्य त्रिंशतांशेन गतमासा निरूपिताः।
भोग्यांशैर्भोग्यमासैश्च गर्भस्य कथयेद्दिनम् ॥
५ १
विषमे जीवसूर्य्यौ + पुत्रजन्मकरौ मतौ।

६ २ ३
समे राशौ स्त्रियं कुर्य्युः शुक्र चन्द्रधरासुताः ॥
५ ११ ०
सुते लाभे शुभे नारी गुर्व्विणीति निगद्यते ।
शुभयुक्ते स्थितैः पुत्रे सन्ततैः शुभमादिशेत् ॥
शुक्रसोमौ सुतस्थानं यदि दृष्ट्वा न पश्यतः ।
न जायते तदा पुत्रः पुत्रप्रश्ने निगद्यते ॥ इत्यादि ।

End. लग्नस्थौ चन्द्रभूपुत्रौ षष्ठस्थौ बुधभार्गवौ ।
निधनस्थो दिननाथस्तदा मन्त्रिवधो भवेत् ॥
तनयस्य बुधः प्रष्टुः पापैरुदयपुत्रगैः ॥
निधने च निशानाथे भङ्गः सूर्य्यात्मजे स्थितैः ।
सप्तमे निधने चन्द्र लग्नस्थे च दिवाकरे ॥
विपर्य्यये वा प्रष्टुश्च भवेद्बन्धवधागमः ।
द्वित्रिकेन्द्रस्थितैः पापैः सम्येश्च बलवर्जितैः ॥
चाष्टमस्थे निशानाथे प्रष्टुर्बन्धे बधेऽथवा ।
१
चार्क्किसंयुते लग्ने दृष्टे च क्षितिसूनुना ॥
चन्द्रे रविबले सौम्ये प्रष्टुः शिलापतेर्बधः ।
इति जयपराजयप्रश्नः ।
कटुः सूर्य्यः कुजस्तिक्तो नवनिशाकरं मिश्रो ।
बुधो गुरुमित्रो भार्गवश्चाम्ल उच्यते ॥ (?)
शनिः कषायः केन्द्रो भवेन्नित्यं ग्रहो बली ।
सौम्ये लग्ने रसैर्युक्तो भुक्तः पापैर्न नीरसः ॥
यः पश्यति ग्रहो लग्नं केन्द्रस्थस्तस्य यो रसः ।
स रसः प्रथमो भुक्तः प्रष्टु ... ... ... ॥
पापलग्ने शुभैर्युक्ते शुभे च पापसंस्थिते ।
यद्यास्तु दैवात् संप्राप्तं प्रष्टा तत्र न भुज्यते ॥
इति भोजनविचारः ॥

Colophon. इति श्रीकाशीनाथकृतौ प्रश्नदीपः समाप्तः ॥

विषयः । मङ्गलाचरणम् । पुत्रप्रश्नः । स्त्रीप्रश्नः । स्त्रीजातकम् । रोगिप्रश्नः । परचक्रा-

गमनप्रश्नः । गमनागमनप्रश्नः । हृतप्रश्नः । नौकाविचारः । स्त्रीलाभप्रकरणम् । नष्टलाभ-प्रश्नः । लाभप्रश्नः । पथि विशेषवस्तुदर्शनम् । भोजनविचारश्चेति ।

---

**No. 134.** प्रश्नसंग्रहः. By ताजकाचार्य्यः. Substance, country-made paper, 13 × 22 inches. Folia, 46. Lines, 4 on a page. Extent, 1,150 çlokas. Character, Bengali. Date, Sk. 1713. Place of deposit, District Ḍhākā, Post Office Lohajaṅga Ākiyādhala, Paṇḍita Kāçīnātha Tarkālaṅkāra. Appearance, old. Verse. Correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।
भास्वन्तं जगदाधारं प्रणम्य विदुषां मुदे ।
कुरुते ताजकाचार्य्यः प्रश्नानां सारसंग्रहम् ॥
परागमनप्रच्छायां लग्ने क्रूरग्रहो यदि ।
मार्गे चागच्छतः शत्रोर्मृत्युरेवं न संशयः ॥ इत्यादि ।

**End.** पापाः केन्द्रान्त्यविलगाः ।
यत्नात् प्रयत्नतस्त्वाच्या अन्यथैव तु शोभनाः ॥

**Colophon.** इति प्रश्नसंग्रहः समाप्तः ॥ ० ॥ शकाब्दाः १७१३ ॥

**विषयः ।** प्रश्नगणनादिनिरूपणम् ।

---

**No. 135.** प्रस्तावसारसंग्रहः. By श्रीरामशर्म्मा. Substance, country-made paper, 13 × 2 inches. Folia, 76. Lines, 5 on a page. Extent, 1,000 çlokas. Character. Bengali. Date, Sk. 1645. Place of deposit, District Ḍhākā, Post Office Kāligañja grāma, Dakṣiṇabhāgā, Paṇḍita Rakṣākara Nyāyapañcānana. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो वाग्देवतायै ।
उमेशमेशौ सर्व्वेशौ नत्वा श्रीरामशर्म्मणा ।
परितोषकामार्थं प्रस्तावसारसंग्रहः ॥
वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता,
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खला-
द्वेते येषु वसन्ति निर्म्मलगुणा स्तेभ्यो नरेभ्यो नमः ॥

तथादौ पुत्रप्रसङ्गो यथा ।

कोऽर्थः पुत्रेण जातेन यो न विद्वान् धार्म्मिकः ।
काणेन चक्षुषा किं वा चक्षुः पीड़ैव केवलम् ॥ १ ॥
अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ २ ॥
न पठति यदि पुत्रो धर्म्मशीलो न शूरो,
वहति च परितापं शेषमन्नञ्च भुङ्क्ते ।
परगृहचलनशय्याश्लेषितः कर्म्मदुःखी,
स्मरति च पितृवाक्यं वाष्पलोलाकुलाक्षः ॥ ३ ॥
शक्यो वारयितुं जलेन हुतभुक् छत्रेण वर्षातपौ,
नागेन्द्रो निगड़ाङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्वैद्यकभेषजैर्मणिमयैर्मन्त्रप्रयोगैर्विषं,
सर्व्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ४ ॥
लालयेत् पञ्चवर्षाणि दशवर्षाणि ताड़येत् ।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥ ५ ॥
... ... ... ... ... ...
जायमानो हरेज्जायां वर्द्धमानो धनं हरेत् ।
म्रियमाणो हरेत् प्राणान् नास्ति पुत्रसमो रिपुः ॥ ११ ॥

End. राजा मत्तः शिशुश्चैव प्रमदा धनगर्विता ।
अप्राप्तमभिवाञ्छन्ति किं पुनर्लभ्यमेव तत् ॥ १६ ॥
वक्ता गुणी शुचिर्दक्षः प्रा ... ज्ञसमो क्षमी ।
ब्राह्मणः परमर्म्मा च दूतः स्यात् प्रतिभाणवान् ॥ १७ ॥
शतन्दद्यान्न विवदेदिति प्राज्ञस्य लक्षणम् ।
विना हेतुमपि द्वन्द्वः सदा मूर्खस्य लक्षणम् ॥ १८ ॥
महतो दूरभीरुत्वमासन्नेश्वरता गुणः ।
विपत्तौ हि महद्दोषो धीरतामधिगच्छति ॥ १९ ॥

Colophon. इति श्रीरामशर्म्मविरचित-प्रस्तावसारसंग्रहः समाप्तः ॥ श्रीरस्तु शुभमस्तु शक १६४५ कार्त्तिकस्य चतुर्विंशतिदिवसे रविवासरे शुक्लपक्षे दशम्यान्तिथौ समाप्तोऽयमिति ॥

**विषयः ।** मङ्गलाचरणम् । सज्जनप्रशंसनम् । पुत्रप्रसङ्गः । विद्याप्रसङ्गः । धनप्रसङ्गः । दैवप्रसङ्गः । सुजनप्रसङ्गः । खलप्रसङ्गः । मित्रप्रसङ्गः । धनभित्रप्रसङ्गः । शत्रुप्रसङ्गः । मित्रप्रसङ्गः । आश्रयप्रसङ्गः । भार्य्याप्रसङ्गः । आचारप्रसङ्गः । राजप्रसङ्गः । आशीर्व्वादप्रसङ्गः । धर्म्मप्रसङ्गः । अन्योन्यप्रसङ्गः । गङ्गाप्रसङ्गः । बङ्गालसेनप्रसङ्गः । शिवाप्रसङ्गः । शङ्कुप्रसङ्गः । वकपञ्चकम् । नानाप्रसङ्गः । विषमार्त्तप्रसङ्गः । भिक्षाप्रसङ्गः । राजप्रसङ्गान्तरम् । ग्रन्थेऽस्मिन्नेकैकं प्रसङ्गमवलम्ब्य बहवः श्लोकाः सन्निवेशिताः, ते च नानाग्रन्थेभ्यः संग्टहीताः ।

---

**No. 136.** प्रातिशाख्यभाष्यम् . By उवटः . Substance, country-made paper, $8\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 157. Lines, 11 on a page. Extent, 4,290 çlokas. Character, Nāgara. Date, Sм. 1830. Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkāra. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । ॐ ।
सूत्रभाष्यकृतः सर्व्वान् प्रणम्य शिरसा शुचिः ।
शौनकश्च विशेषेण येनेदं पार्षदं कृतम् ॥ इत्यादि ।

**End.** स्वामिकुमारपुत्रेण मुद्गलेन तु धीमता ।
कृतमानायेदं दत्तं भात्रे शिष्याय धीमते ॥
विष्णुभक्तागतानि यो वेद भक्तितः स स्वर्गलोकं जयति एभिः सह अमृतत्वं गच्छति इत्याह भगवान् शौनकः ।

**Colophon.** इति श्रीपार्षदव्याख्यायामानन्दपुरवास्तव्यवज्रटपुत्र उवटकृतौ प्रातिशाख्यभाष्ये अष्टादशं पटलं समाप्तं ॥ सम्वत् १८३० ॥

**विषयः ।** ऋग्वेदप्रातिशाख्यव्याख्या ।

---

**No. 137.** प्रायश्चित्तविवेकव्याख्या . (निगूढार्थप्रकाशिका) . Substance, country-made paper, $12 \times 3$ inches. Folia, 22. Lines, 8 on a page. Extent, 700 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Post Office Aṇḍāl, Kājoḍā, Akhilanātha Nāyek. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ दुर्गायै नमः ।
गौरीचमातिलकमञ्जुलभालदीप्त-
मिन्दीवरोदरसहोदरकान्तिकान्तम् ।

मन्दात्मने मम इतः परिधावमानं

आनन्दमीशमनिशं हरिमाननतोऽस्मि ॥

प्रायश्चित्तविवेकस्य निगूढार्थप्रकाशिका ।

टिप्पनीयं सहृदये प्रियतां हृदये सदा ॥

शास्त्रस्य परार्थतया ततृप्रवृत्त्युपयोगित्वेनाभिधेयप्रयोजने विवक्षुराह ·

नित्येत्यादि ॥

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषय: ।** शूलपाणिकृतस्य प्रायश्चित्तविवेकस्य व्याख्यानम् ।

---

**No. 138.** प्रेमामृतटीका. By हरिनारायणशर्म्मा. Substance, palm-leaf, 17 × $1\frac{1}{2}$ inches. Folia, 43. Lines, 4 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vidgã, Paṇḍita Içānacandra Tarkapañcānana. Appearance, old, Prose. Generally correct.

**Beginning.** ० ० ० ० श्रीहरिनारायनशर्म्मा । तनुते प्रेमामृतस्य टीकां ० ० ० ० इह संसारोत्तारणकारण ० ० ० ० अशेषविघ्नध्वंसपूर्व्वकस्वेष्टदेवतानमस्कारं कुर्व्वन्नाह यं नत्वेति ॥ इत्यादि ।

**End.** × × × पिधानव इति तालव्यान्ते मेदिनी ॥ * ॥

**Colophon.** इति श्रीहरिनारायणशर्म्मविरचितायां प्रेमामृतटीकायां पारखण्डः समाप्तः ॥ ० ॥ अतःपरं खण्डितम् ।

**विषय: ।** प्रेमामृतस्य व्याख्यानम् ।

---

**No. 139.** बालविवेकिनी. By माझिदत्तः. Substance, country-made paper, $9\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 5. Lines, 9 on a page. Extent, 125 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Mohanta Bharata Rāmānuja Dāsa. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

रेवत्युत्तररोहिणीमृगमघामूलानुराधाकरः

स्वातीषु प्रमदातुलामिथुनके लग्ने विवाहः शुभः ।

मासाः फाल्गुनमाघमार्गशुचयो ज्येष्ठस्तथा माधवः
शस्ताः सौम्यदिनं तथैव तिथयो रिक्ताकुहूवर्जिताः ॥

इति विवाहमुहूर्त्तः ।

पूषा पुष्यपुनर्वसूत्तरमृगामैत्राश्विहस्तत्रयं
रोहिण्यां श्रवणाद्द्विरागमविधौ मूला धनिष्ठा तथा ।
कुम्भाजालिरविस्थ वर्षमसमं त्यक्त्वा कुजार्कौ तुला
कन्या मन्मथमीनयुग्ममकरा लग्नानि यात्रातिथिः ॥

इति द्विरागमः ।

मूलादित्रितये करे श्रवणके भाद्रद्वयाश्वात्रये
रेवत्यां च मृगे गुरौ दिनकरे भौमेऽप्यरिक्ते तिथौ ॥

... ... ... ... ... ...

लग्ने पुंसवनं तथैव शुभदं सीमन्तकर्म्माष्टमे ॥

इति पुंसवनसीमन्तकर्म्म ॥ इत्यादि ।

End. जीवे मूलयमार्य्यमानिलमघाश्लेषात्रयं वारुणं
पूषा चाथ करौ शिवेन्द्रपवना × × त्रयं रोहिणी ।
चित्रा चाथ शनौ मघा हरियुगं पूर्व्वार्य्यमादित्रयं
... ... ... ... भाग् यामतः शोभनाः ॥
बालानामकर्म्मः कैकतः श्लोकादेश्लिति ?
संगयानि नियमात् श्लोकचतुर्व्विंशति च । (?)
पूर्व्वाचार्य्यकृतान् विलोक्य बहुशो ज्योतिर्निबन्धान् बहून्
मत्वा श्रीपतिपादपद्ममधुपः श्रीनाशिदत्तो द्विजः ॥

Colophon. इति श्रीबालविवेकिनी समाप्ता । श्रीरामाय नमः ।

विषयः । विवाहकालनिरूपणम् । द्विरागमनकालनिरूपणम् । पुंसवनसीमन्तोन्नयनकाल-निरूपणम् । निष्क्रमणकालनिरूपणम् । नववस्त्रपरिधान-नवान्नप्राशनयोः कालनिरूपणम् । विद्यारम्भकालनिरूपणम् । प्रथमान्नप्राशनकालनिरूपणम् । कर्णवेधकालनिरूपणम् । बीजवपन-कालनिरूपणम् । गृहप्रवेशकालनिरूपणम् । तडागप्रतिष्ठाकालनिरूपणम् । यात्रायां निषिद्ध-कालनिरूपणम् । माहेन्द्रक्षणादिकालनिरूपणञ्च ॥

**No. 140.** बृहज्जाबालोपनिषत्. Substance, country-made paper, 12 × 5 inches. Folia, 12. Lines, 9 on a page. Extent, 250 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ श्रीमद्विद्याधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः ॥
यज्ज्ञानाग्निः स्वाभिरिक्तभ्रमं भस्म करोति तत् ।
बृहज्जाबालनिगम शिरो-वेद्यमहं महः ॥
भद्रं कर्णेभिरिति शान्तिः ॐ आपो वा इदमासन् सलिलमेव स प्रजापति-
रेकः पुष्करपर्णे समभवत् । इत्यादि ।

**End.** तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदं ॐ सत्यमित्युपनिषत् ॥
अष्टमं ब्राह्मणं ॐ भद्रं कर्णेभिरिति शान्तिः ॐ श्रीमद्विद्याधिष्ठानपरमहंस-
सद्गुरुरामचन्द्रार्पणमस्तु बृहज्जाबालोपनिषत् समाप्ता ॥

**विषयः ।** विभूतियोगादिकथनम् । कालाग्निरुद्रमाहात्म्यादिकथनञ्च ॥

---

**No. 141.** बृहदारण्यकभाष्यटीका. By आनन्दज्ञान. Substance, country-made paper, 12 × 7 inches. Folia, 532. Lines, 7 on a page. Extent, 10,600 çlokas. Character, Nāgara. Date, Sm. 1884. Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose. Generally correct.

**Beginning** श्रीगणेशाय नमः ।
यदविद्याविलासादिदं दृश्यते रज्जवाहिवत् ।
यद्विद्यया च तद्भाति तं वन्दे पुरुषोत्तमम् ॥ इत्यादि ।

**End.** गुरवे परपक्षौघध्वान्तध्वंसप्रतिपत्तये । (?)

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्यशुद्धानन्द-पूज्यपाद-शिष्य-भगवदानन्दज्ञान-कृतायां बृहदारण्यकभाष्यटीकायां अष्टमोऽध्यायः समाप्तः । सम्वत् १८८४ ।

**विषयः ।** बृहदारण्यकशाङ्करभाष्यस्य व्याख्यानम् ।

---

No 142. बृहद्गोत्रप्रवरमञ्जरी. By पुरुषोत्तमपण्डितः. Substance, country-made paper, 19 × 4 inches. Folia, 57. Lines, 6 on a page. Extent, 1,250 çlokas. Character, Nāgara. Date, ? Place of deposit, Calcutta, Syāmapukura, Bābu Nagendranātha Vasu. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

यज्जन्म यत्स्थं यदीयं जगदिदमखिलं यन्मयं यत्प्रधानं
यत्प्रमेयं यन्निवासं स्थिरचरहृदयं यन्मुरासं (?) प्रभूतम् ।
यत्क्रीडावस्तुभूतं यदनुभवसुखं यत्स्वरूपानभिज्ञं
यत्स्वापं यत्प्रबोधं यदतिचितितमं ब्रह्म तस्मै नमोऽस्तु ॥
... ... ... ... ... ... ।
तत्तत्प्रोक्तपुराणभारतगताः स्मृत्यन्तरोक्ताश्च ये
ते गोत्रैः प्रवरैश्च पूर्व्वगदितां बध्नाम्यहं मञ्जरीम् ॥
कन्यामूढ्वा सगोत्रप्रवरपुरुषजां मातृवत् दोषदीर्घः ।
प्रायश्चित्तादिदोषभाक् स्याज्जनयति च सुतं जातिचाण्डालमस्यां ॥ इत्यादि ।

**End.** नान्यवर्णे दद्यान्नापुत्राय नाशिष्याय नासम्वत्सरोषिताय सर्व्वेषां पंक्तिपावनानामुपरिष्ठो भवति यः प्रवराध्यायमधीते स चिरजीवी भवति पुण्यवान् भवति यः प्रवराध्यायमधीते ॥

**Colophon.** इति श्रीपुरुषोत्तमपण्डितविरचितायां गोत्रप्रवरमञ्जर्यां मत्स्याप्रवराध्यायपरिसमाप्तिः गोत्रप्रवरकाण्डं समाप्तम् ॥ * ॥

विषयः। प्रथमाध्याये समानगोत्रप्रवर-विवाहदोषादिकथनम् । २ ये विवाहे गोत्रप्रवरवर्ज्जनादिकथनम् । ३ ये प्रवरक्रमादिकथनम् । सर्व्वे सगोत्रा इत्यादिवाक्यानां विचारमुखेन व्याख्यानञ्च । ४ । ५ । ६ । ७ । ८ । ९ मेषु भृगूनां गोत्रप्रवरकाण्डकथनम् । एतत् सर्व्वं बौधायनीय प्रवराध्याये । आपस्तम्बीयप्रवराध्याये । १ मे आपस्तम्बप्रोक्तभृगूनां गोत्रप्रवरादिकथनम् । कात्यायनप्रोक्त भृगूनां प्रवरादिकथनम् । आश्वलायनप्रोक्त भृगूनां प्रवरादिकथनम् । मत्स्यपुराणीय भृगुगोत्रप्रवरादिकथनम् । गौतमगोत्रप्रवरादिकथनम् । आपस्तम्बायुक्त गौतमभरद्वाजादिगोत्रप्रवरादिकथनञ्च ॥

---

No. 143. ब्रह्मसूत्रभाष्यम्. By विज्ञानभिक्षुः. Substance, country-made paper, 8 × 3 inches. Folia, 198. Lines, 7 on a page. Extent, 2,376 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Damanācāryya Çāstri. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो नारायणाय ।
सर्व्वत्र यो यत्र सर्व्वं यत्र सर्व्वमतो भवेत् ।
वेदवित्प्रवरायै तस्मै नमस्त्रिमात्ररूपिणे ॥
गुरुदिष्टज्ञान + × + विज्ञानभिक्षुणा ।
ब्रह्मसूत्र ऋजुव्याख्या क्रियते गुरुदक्षिणा ॥
श्रुतिस्मृतिन्यायवचः क्षीराब्धिमथनोद्धृतम् ।
ज्ञानामृतमगुरोः प्रीत्यै भूदेवेभ्योऽनुदीयते ॥ इत्यादि ।

**End.** शरीरारम्भकत्वं न सम्भवतीत्याशङ्कायामाह मांसादिभौमं यथाशब्द-मितरयोश्च ॥

**Colophon.** इति नास्ति ।

**विषय: ।** महर्षिबादरायणप्रणीतस्य ब्रह्मसूत्रस्य व्याख्यानम् ।

---

**No. 144.** ब्रह्माण्डपुराणम्. Substance, country-made paper, 17×7 inches. Folia, 312. Lines, 11 on a page. Extent, 10,000 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ॥
नमो नमः क्षये सृष्टौ स्थितौ सत्त्वमयाय च ।
नमो रजस्तमःसत्त्वरूपाय स्वयम्भुवे ॥
जितं भगवता तेन हरिणा लोकधारिणा ।
अजेन विश्वरूपेण निर्गुणेन गुणात्मना ॥
ब्रह्माणं लोककर्त्तारं सर्व्वज्ञमपराजितम् ।
प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिम् ॥ इत्यादि ।

**End.** सर्व्वाणि चान्ति तथैव तानि
... विधास्येवोपनिषद्यस्य ।
... पूर्व्वं जननं जनानां
यत्रात्मकं सत्यलोकप्रतिष्ठम् । (?)
वरं वराणां वरदं महेश्वरं
ब्रह्माणमादिं प्रयतो नमस्ये ॥

**Colophon.** इति श्रीब्रह्माण्डपुराणे वायुप्रोक्ते द्वादशसाहस्र्यां संहितायां ब्रह्माण्डपर्व्व: समाप्तः ॥ * ॥ * ॥

**विषयः।** 'इति श्रीब्रह्माण्डपुराणे प्रक्रियापादः प्रथमः अध्यायः। इति श्रीब्र० पु० अनुषङ्गे रुद्रप्रसवः २—४ अः। इति श्रीब्र० पु० महादेवविभूतिः ५, ६ अः। इति श्रीब्र० पु० अनुषङ्ग-पादे अग्निविक्रमः ७ अः। इति श्रीब्र० पु० व्याससद्भावः ८ अः। इति श्रीब्र० पु० प्रियव्रतवंशा-नुकीर्त्तनं ९, १० अः। इति श्रीब्र० पु० अनुषङ्गपादे भारतवर्षनं ११, १२ अः। इति श्रीब्र० पु० अनुषङ्गपादे जम्बुवर्णनं १३ अः।... .... ... ... ... ...। इति श्रीब्र० पु० षट्पञ्चाशत्तमो-ऽध्यायः। एषु अध्यायेषु शाकद्वीपादिवर्णनम्। इति श्रीब्र० पु० आदित्यसङ्कीर्त्तनं नाम ५७, ५८ अः। इति श्रीब्र० पु० लिङ्गोत्पत्तिकथनं नाम ५९—६३ अः। इति श्रीब्र० पु० देवदारुवन-प्रवेशभङ्गाख्यानविधिर्नाम ६४ अः। इति श्रीब्र० पु० सांख्यवर्त्ती नाम ६५, ६६ अः। इति श्रीब्र० पु० यज्ञप्रवर्त्तनो नाम ६७ अः। इति श्रीब्र० पु० अनुषङ्गपादे चतुर्युगाख्यानं नाम ६८, ६९ अः। इति श्रीब्र० पु० ऋषिलक्षणं नाम ७० अः। इति श्रीब्र० पु० अनुषङ्गपादे ऋषिशिष्योत्पत्तिः नाम ७१ अः। इति श्रीब्र० पु० अनुषङ्गपादे पृथिवीदोहनं नाम ७२ अः। इति श्रीब्र० पु० अनुषङ्गपादः द्वितीयः समाप्तः॥ इति श्रीब्र० पु० उपोद्घाते प्रजापतिवंशानुकीर्त्तनं नाम १, २ अः। इति श्रीब्र० पु० उपोद्घाते मरुदुत्पत्तिः नाम ३—५ अः। इति श्रीब्र० पु० उपोद्घाते दनुवंशकीर्त्तनं नाम ६ अः। इति श्रीब्र० पु० श्राद्धकल्पे शौचविधिः नाम ७—१४ अः। इति श्रीब्र० पु० उपोद्घातपादे ब्राह्मणपरीक्षा नाम १५ अः। इति श्रीब्र० पु० श्राद्धकल्पे दानप्रशंसा नाम १६ अः। इति श्रीब्र० पु० श्राद्धकल्पे तिथिश्राद्धं नाम १७ अः। इति श्रीब्र० पु० नक्षत्रश्राद्धं नाम १८ अः। इति श्रीब्र० पु० उपोद्घातपादे श्राद्धकल्पो नाम १९, २० अः। ... ... ... ... ... ...। इति श्रीब्र० पु० मध्यभागे ६१ अः। इति श्रीब्र० पु० मध्यभागे वशिष्ठसगरसम्वादे अर्जुनोपाख्याने जामदग्न्यतपश्चरणं नाम ६२ अः। इति श्रीब्र० मध्यभागे अर्जुनोपाख्याने ६३—६७ अः। इति श्रीब्र० पु० मध्यभागे भार्गवचरिते ६८—७९ अः। इति श्रीब्र० पु० भा० च० कार्त्तवीर्य्यवधः नाम ८०—९८ अः। इति श्रीब्र० पु० वायुप्रोक्ते वैवस्वतो-त्पत्तिर्नाम ९९ अः। इति श्रीमत्स्यपुराणे वायुप्रोक्ते वैवस्वतमनुसृष्टिः नाम १०० अः। इति श्रीम० पु० वा० प्रो० गान्धर्व्वमूर्च्छा नाम १०१ अः। इति श्रीम० पु० वा० प्रो० गान्धर्व्वलक्षणं नाम १०२ अः। इति श्रीम० पु० वा० प्रो० इक्ष्वाकुवंशकीर्त्तनं नाम १०३ अः। इति श्रीम० पु० वा० प्रो० मिथिलावंशकीर्त्तनं नाम १०४ अः। इति श्रीम० पु० वा० प्रो० राजवृद्धं नाम १०५ अः। इति श्रीम० पु० वा० प्रो० प्रसवः नाम १०६ अः। इति श्रीम० पु० वा० प्रो० ज्यामघसृष्टिः नाम १०७ अः। इति श्रीम० पु० वा० प्रो० वृष्णिवंशानुकीर्त्तनं नाम १०८ अः। इति श्रीवायु-पुराणे अनुषङ्गपादः १०९ अः। इति श्रीमत्स्यपुराणे वायुप्रोक्ते शिवप्रकरणं नाम ११० अः। इति श्रीब्रह्माण्डपुराणे वायुप्रोक्ते द्वादशसाहस्र्यां संहितायां ब्रह्माण्डावर्त्तः समाप्तः॥ *॥

---

**No. 145.** भगवदाराधनक्रमः. By श्रीमन्नारायणमुनिः. Substance, country-made paper, $5\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 11. Lines, 6 on a page. Extent, 170 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Mohanta, Bharata Rāmānuja Dāsa. Appearance, new. Prose and verse. Correct.

**Beginning.** श्रीमते रामानुजाय नमः । प्रातरारभ्यानुष्ठानक्रमः । प्रातः समुत्थाय पादौ करौ प्रक्षाल्य प्राङ्मुखः स्थित्वा हरिरिति विचार्य्य गुरुपरम्परामनुसन्धाय स्वाचार्य्यं ध्यात्वा अनन्तरम्

सत्सङ्गात् भवनिस्पृहो गुरुमुखात् श्रीशं प्रपद्यात्मवान्

प्रारब्धं परिभुज्य कर्म्मसकलं प्रक्षीणकर्म्मान्तरम् ।

न्यासादेव निरङ्कुशेश्वरदयानिर्मूलमाया × ×

हार्द्दानुग्रहलब्धमध्यमनिद्वारादहिर्निर्गतः ॥ इत्यादि ।

**End.** संपूज्य भगवते पर्य्यङ्के निवेश्य निवेद्यं मनसा चतुर्भागं परिकल्प्य विष्वक्सेन-अनन्त-गरुड़-सुदर्शनेभ्यः निवेद्यान्नं × × स्वाचार्य्येभ्यश्च निवेद्य × × × शेषं भागवतैः सह भुञ्जीत ॥

**Colophon.** इति श्रीमन्नारायणमुनिकृतं भगवदाराधनक्रमणं सम्पूर्णम् ॥

**विषयः ।** भगवत्परायणस्य प्रातरुत्थाय दिनं यावत् कर्त्तव्यकर्म्मनिरूपणम् ।

---

**No. 146.** भगवद्गीताटीका. (सारार्थवर्षिणी). Substance, foolscap paper, $13 \times 6$ inches. Folia, 73. Lines, 14 on a page. Extent, 340 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura Lohajanga, Bābu Mukundalāla Pāla Caudhuri. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ।

गौरांशुकः सत्कुमुदप्रमोदी स्वाभिख्यया गोस्तमसो निरस्ता ।

श्रीकृष्णचैतन्यसुधानिधिर्मे मनोऽधितिष्ठन् स्वरतीः करोतु ॥

प्राचीनवाचः सुविचार्य्य सोऽहमज्ञोऽपि गीतामृतलेशलिप्सुः ।

यतेः प्रभोरेव मते तदत्र सन्तः क्षमध्वं शरणागतोऽस्मि ॥

इह खलु सकलशास्त्राभिमत-श्रीमच्चरणसरोजभजनः स्वयं भगवान्नराकृतिः परब्रह्म श्रीवसुदेवसूनुः स्वसौन्दर्य्यमाधुर्य्यास्वादनया स्वीयप्रेमसुधाम्बुधौ निमज्जयामास । इत्यादि ।

पुष्पाणि रत्नान्यथ मण्डनानि
धनानि विप्रर्षिमनीषिभ्यः ।
ददौ नृपेशो मुनये तु तस्मै
प्रणाममङ्गान्यनुनमश्रीः ॥
नानाप्रश्नः समाप्तः ।
सर्वोपनिषदां सारं सारमाध्यात्मयुत्तमम् ।
नानाप्रश्नेति यत्नाख्ये मोक्षदं सिद्धिकारणम् ॥

**Colophon.** इत्यार्षे रामायणे शतसाहस्र्यां संहितायां निर्व्वाणप्रकरणे नानाप्रश्नः समाप्तः । समाप्तश्चायं मोक्षोपायः इति शुभमस्तु ॥

**विषयः ।** श्रीरामवशिष्ठसंवादमुद्धृत्य वाल्मीकिरेवास्य वक्ता तत्रास्मिन् नानाप्रश्नविचारः । आतिवाहिकाधिभौतिकैक्यावबोधपूर्वकं बन्धाभावप्रतिपादनम् । ब्रह्मप्रतिपादनम् । प्राणेन मरणविचारणम् । मरणजीवितैक्यावबोधनम् । जीवस्वभावपरमार्थवर्णनम् । जीवस्वभावेषु परमपदावबोधनम् । जीवन्मुक्तस्वभाववर्णनम् । सदेहादेहमुक्तवर्णनम् । लोकद्वयानुभवयुक्तोपदेशवर्णनम् । सर्गादावुपादानकारणनिरसनम् । प्राणनजन्मपितृकार्य्यनिरूपणम् । परब्रह्मस्वरूपवर्णनम् । पूर्वोक्तविषयाणां साकल्येनावबोधनञ्च ।

---

**No. 173. योगसारः.** Substance, country-made paper, 18×3 inches. Folia, 22. Lines, 9 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, ? Place of deposit, Kājoḍā, Post Office Aṇḍāl, District Bardhamāna, Yatīndra Nātha Nāyek. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ दुर्गा । श्रीमहादेव उवाच ॥
मातर्म्मे देवदेवेशि योगेशि प्राणवल्लभे ।
सर्वं मातः सुरेशानि संसारतारिके शुभे ॥
शरणागतदीनार्त्तपरित्राणपरायणे ।
त्वां विना देवदेवेशि संसारः तृणवत् प्रिये ॥
एकं संप्रष्टुमिच्छामि यदि तेऽनुग्रहो मयि ।
योगसारं महेशानि कथयस्वानुकम्पया ॥
संसारतारणे देवि तरणिस्त्वं यतः प्रिये ।
असारे घोरसंसारे सर्वे दुःखमलीमसाः ।
*जायन्ते च म्रियन्ते च असंख्या जीवराशयः ॥ इत्यादि ।

**End.** आद्यान्तोऽयं मनुः प्रोक्तो रात्रिवश्यत्रयकर्म्मणि ।
सहस्रत्रयजपात् सिद्धिर्जायते कुलभैरव ॥
इति ते कथितं किञ्चिद्वशीकरणमुत्तमम् ।
समासेन महेशान किमन्यत् कथयामि ते ॥ ० ॥

**Colophon.** इति योगसारे सर्व्वागमोत्तमोत्तमे श्रीपार्व्वतीशिवसम्वादे शतसाहस्र्यां संहितायां वशीकरणोद्दीपने रात्रिवश्यत्रयो नाम द्वादशः परिच्छेदः ॥ * ॥
अतः परं खण्डितम् ।

**विषयः** । प्रथमपरिच्छेदे मन्त्रपुरश्चरणविधिः । २ ये योगमाहात्म्यवर्णनम् । ३ ये षट्चक्रदर्शनोद्दीपनादिः । ४ र्थे मूलाधारस्थदेवताध्यानम् । ५ मे वाणलिङ्गोपाख्यानम् । ६ ष्ठे देवस्य-देवतावर्णध्यानमुखेन मणिपूरकाधिष्ठानचक्रादिवर्णनम् । ७ मे हृत्पद्मध्यानार्च्चनादिः । ८ मे षोड़शदलस्य वर्णनम् । ९ मे षट्चक्रादिचक्रे द्विदलादिवर्णनम् । १० मे गुरुस्तवकवचादिः । ११ शे गुरुसहस्रनामादिः । १२ शे वशीकरणोद्दीपने रात्रिवश्यत्रयकर्म्मादिनिरूपणमिति ।

---

**No. 174.** रघुवंशटीका . ( सुबोधा ) By भरतसेनः . Substance, country-made paper, 13 × 3 inches. Folia, 169. Lines, 7 on a page. Extent, 4,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Kālnā, Pandita Kānticandra Tarkavācaspati. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।
प्रणम्य गौरीं गिरिशञ्च भक्त्या
गौराङ्गमल्लीकतनुप्रभूतः ।
भूभृन्निदेशाद्भरतः सुबोधां
वैद्यो विधत्ते रघुवंशटीकाम् ॥
कालिदासो महाकविः महाकाव्यं रघुवंशाभिधं चिकीर्षुर्विघ्नविघातार्थं स्वेष्टदेवताप्रणामात्मकं मङ्गलमादावाचरति । वागर्थाविव्यादि । पार्वतीपरमेश्वरौ गौरीशङ्करावहं वागार्थप्रतिपत्तये वाचामर्थानाञ्च सम्यगवबोधाय वन्दे प्रणमामि । इत्यादि ।

**End.** रघुवंश्यो रघुवंशकेतो इत्यरवः रैमिकैः सखीविवाम् मञ्जनः सम् आलम्बिरं अवशेष समासतयाम् । रचिराख्यन्दः ।

**Colophon.** इति वैद्यहरिहरखानवंशसम्भवश्रीरामकृष्णात्मज-श्रीभरतसेनकृतायां रघु-
वंशटीकायां सुबोधायां नवमः सर्गः ॥ * ॥ श्रीकृष्णाय नमः ।

**विषयः ।** प्रथममारभ्य नवमसर्गं यावत् कालिदासकृत रघुवंशाख्यकाव्यस्य व्याख्यानम् ।

---

**No. 175.** **रङ्गनाथपादुकासहस्रम्,** By **वेङ्कटनाथवेदान्ताचार्य्यः**. Substance, country-made paper, 11 × 4 inches. Folia, 79. Lines, 10 on a page. Extent, 1,400 çlokas. Character, Nāgara. Date. ? Place of deposit, District Medinīpura Candrakoṇā, Mohanta Bharata Rāmānuja Dāsa. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीमते निगमान्तगुरवे नमः ।
श्रीमान् वेङ्कटनाथार्य्यः कवितार्किककेशरी ।
वेदान्ताचार्य्यवर्य्यो मे सन्निधत्तां सदा हृदि ॥
सन्तः श्रीरङ्गपृथ्वीशचरणत्राणशेखराः ।
जयन्ति भुवनत्राणपदपङ्कजरेणवः ॥
भरताय परं नमोऽस्तु तस्मै
प्रथमोदाहरणाय भक्तिभाजाम् ।
यदुपज्ञमशेषतः पृथिव्यां
प्रथितो राघवपादुकाप्रभावः ॥
वर्णस्तोमैर्वकुलसुमनोवासनामुद्वमन्ती-
माम्नायानां प्रकृतिमपरां संहितां दृष्टवन्तम् ।
पादे नित्यं प्रणिहितधियं पादुके रङ्गभर्त्तु-
स्त्वन्नामानं मुनिमिव भजे त्वामहं स्तोतुकामः ॥ इत्यादि ।

**End.** यदि स्थेया भक्तिः प्रणयमुखवाणी + + +
पदन्यासस्तोमं हृदि विभृत रङ्गक्षितिभृतः ।
निबन्धाद्वो यद्वा निरवधिसुधानिर्भरमुचो
वचोभङ्गीरेताः कथमनुबध्ने सहृदयः ॥ (?)
जयति यतिपतिराजस्तज्जयति मुकुन्दस्य पादुकायुगलम् ।
... ... ... ... ... ... ... ... ... ... ... ॥

**Colophon.** इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ता-
चार्य्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे फलपद्धतिर्द्वात्रिंश + + ।

विषयः। भगवतो रङ्गनाथस्य पादुकास्तवः पादुकयोश्च मनोभावप्रस्तावपद्धति-समाख्या-पद्धतिप्रभावपद्धति-सञ्चारपद्धति-परागपद्धति-विम्बप्रतिविम्बपद्धति-चित्रपद्धति-फलश्रुतिपद्धतिप्रभृतिभिर्विविधाभिः स्तुतिभिः स्तवः ॥

---

**No. 176.** रसकल्पलता, By मोहनानन्दः. Substance, country-made paper, 12 × 4 inches. Folia, 7. Lines, 7 on a page. Extent, 122 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Uthali, Paṇḍita Dinabandhu Gosvāmī. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीश्रीकृष्णाय नमः।
राधायै रसरूपायै कृष्णायानन्दरूपिणे।
नमोऽनिर्व्विततत्त्वाय तयोरनुभवो रसः ॥
वाचं श्रीरूपनिष्पन्नां भक्तिरसप्रापिकों पराम्।
रचयामि यथाज्ञानं प्रीतये रतये हरौ ॥ इत्यादि।

**End.** श्रीकृष्णकरजस्पर्शात् प्रेम्णा या पुलकायिता।
सेयं ग्रन्थप्रबन्धेन रसकल्पलतां भज ॥ १२२ ॥

**Colophon.** इति श्रीमोहनानन्दाचार्य्यविरचिता रसकल्पलता समाप्ता ॥ * ॥

विषयः। कृष्णस्तुतिः भक्त्युपदेशश्च।

---

**No. 177.** रसचन्द्रिका, By माधवकविचन्द्रः. Substance, country-made paper, 14 × 3 inches. Folia, 181. Lines, 5 on a page. Extent, 2,200 çlokas. Character, Bengali. Date, Sk. 1735. Place of deposit, Ḍhākā, Paṭuātuli, Bābu Yādavānanda Gupta. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।
विधत्ते यन्मूर्त्तं रुचिरनखराग्रेण रुचिरं
पुरारातेर्मौलौ विमलकरकिशोरश्रमभवम्।
... ... ... ... ...
आसीत् सत्कृतिसुहृद् कविचन्द्रवैद्य-
श्रीमाधवेन विदधे रसचन्द्रिकेयम् ॥ इत्यादि।

**End.** भाषितः कामदेवेन मेथीमोदकसञ्ज्ञकः ।
यक्ष्मो ह्रासयते नित्यं मोदकस्य च सेवनात् ॥ मेथीमोदकः ।

**Colophon.** इति ह्व्याधिकारः ॥ * ॥ समाप्तश्चायं ग्रन्थः ॥
वाणाचिन्ताधरक्षापरिमिलितगते वत्सरे राजस्ये
सूर्य्ये तुर्य्ये दिसंख्ये हिमकिरणदिने वैद्यवंशोद्भवोऽसौ ।
श्रीदुर्गानन्ददासो निजलिपिनिकरैः पूर्णतां ग्रन्थमेतत्
× × × × × × × ॥

**विषयः।** रसप्रशंसा । मत्शोधनादिनिरूपणम् । दीपनादिनिरूपणम् । अधादशाधन-प्रकारः । ज्वरादिचिकित्सा । शूलादिचिकित्सा । व्रणादिचिकित्सा । प्रदरादिचिकित्सा । ह्व्याधिकारश्चेति ।

---

**No 178.** **रागवर्त्मचन्द्रिका.** Substance, foolscap paper, 12 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Lohajaṇga, Bābu Mukundalāla Pālacaudhurī. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीहरिदासवर्य्याय नमः ।
श्रीरूपवाक्सुधास्वादि-चकोरेभ्यो नमो नमः ।
येषां कृपालवैर्वीक्षे रागवर्त्मनि चन्द्रिकाम् ॥
श्रीमद्भक्तिरसाम्भोधिविन्दुर्यः पूर्वदर्शितः ।
तत्र रागानुगा भक्तिः संक्षिप्तात्र प्रतन्यते ।
वैधी भक्ति र्भवेत् शास्त्रं भक्तौ चेत् स्यात् प्रवर्त्तकम् ॥ इत्यादि ।

**End.** गीतोक्तगर्व्वाभिर्व्वक्ष्यो मुक्तस्यापमनुभूतवन्तोऽनुभवन्तोऽनुभविष्यन्ति चेत्यलमति-विस्तरेण ॥ * ॥
रागानुगावर्त्म दुर्दर्शं विबुधैरपि ।
परिचिन्वन्तु सुधियो भक्ताचन्द्रिकयानया ॥ * ॥

**Colophon.** इति समाप्तेयं रागवर्त्मचन्द्रिका ।

**विषयः।** संक्षेपेण रागानुगभक्त्यादिनिरूपणम् ।

---

**No. 179.** राजनीतिः. By नीलकण्ठः. Substance, country-made paper, 9 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 188 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** श्रीहरिः शरणम् ।

द्वैविध्यसंघातात्मवाङ्मनसगोचरम् ।
प्रत्यक्षमपि तद्ब्रह्म सर्वदा समुपास्महे ॥
विरोधि मार्गद्वयदर्शनार्थं
द्वेधा बभूवात्र परः पुमान् यः ।
श्रीशङ्करो भट्ट दिवेकरो
मीमांसकाद्वैतमुरीचकार ॥ इत्यादि

**End.** विभुश्चापि दिवि श्रेष्ठश्चान्यश्च जगतिन्तः ।
एते त्वामभिषिञ्चन्तु साध्या द्वादशपार्थिवाः ॥

**Colophon.** अतःपरं खण्डितम् ।

**विषयः ।** राजधर्मकथनम् ।

---

**No. 180.** राममहिम्नः स्तोत्रम्, By विजयरामाचार्यः. Substance, country-made paper, 10½ × 5½ inches. Folia, 7. Lines, 8 on a page. Extent, 250 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinipura, Candrakoṇā, Bharata Rāmānuja Dāsa. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीरामाय नमः ।

महामोहावर्त्ते पतितमिव मां ते शरणं
शरण्यस्त्वत्तोऽन्यः प्रभवति न कोऽप्यत्र जगति ।
अतस्त्वत्पादाम्भोरुहयुगलमाश्रित्य नितरा-
मितीदं संसाराद्दुर्जलनिधपादुद्धर विभो ॥
निजाव्यक्तेनेदं जगदखिलमिच्छादिकरणैः
समुत्पन्नं कृत्वा वससि सततं श्रीरघुपते ।
युगान्ते सर्वं वै हरसि किल रौद्रेण वपुषा
अनेकः सन्नित्थम् विहरसि न चान्यो गुणनिधे ॥

रमन्ते योगीन्द्राखिपुरवरसुखास्वपि सदा
समाधौ विश्वात्मन् नियमित ... रघुपते ।
मधाप्येते पारं निखिलनिगमागोचर विभो
महिम्नस्ते नूनं गमयितुमलं नैव कुशलाः ॥ इत्यादि ।

**End.** तुभ्यं नमो भगवते रघुनन्दनाय
श्रीजानकीप्रियतमाय सखात्मकाय ।
योगेन्द्रपूजितपदाम्बुजद्वयाय
संसारदुःखशमनाय नमो नमस्ते ॥
कामाख्या दुर्जयाचेन्मम भवतु पुनर्मुक्तियोषित्सु कामः
क्रोधश्चेत् पातके वै तव चरणयुगाम्भोजके स्याच्च लोभः ।
मोहश्चेत् ध्यानयोगे मम भवतु पुनर्मत्सरो वै मनोऽन्यद्
+ + सौख्यस्थितिमिह नितरां नैव पश्यामि भूमौ ॥

**Colophon.** इति श्रीमच्चतुर्भुजाचार्य्यचरणसरोजनिवसनमनश्चञ्चरिकास्वादितचिन्मकरन्द श्रीमद्विजयरामाचार्य्यविरचितं श्रीराममहिम्नः स्तोत्रं समाप्तम् । शुभमस्तु ।

**विषयः ।** श्रीरामस्य माहात्म्यकीर्त्तनम् ।

---

**No. 181.** रामवाणः. By दामोदरः. Substance, country-made paper, 8 x $2\frac{1}{2}$ inches. Folia, 6. Lines, 11 on a page. Extent, 132 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
महादेवपुत्रं गणेशं भजेऽहं
श्रुतेर्यस्य कार्य्याणि सिद्धिं प्रयान्ति ।
कथितेति (?) शङ्किर्गदानां विनाशो
(?) नरान्निर्भवेत् यस्य कृपां प्रसादात् ॥ इत्यादि ।

**End.** चक्राभिषेकाय परिपूजनस्य सामयिकं सर्वमयं प्रदेयम् ॥

**Colophon.** श्रीमद्दामोदरकृता वायुर्वेद + × × ।
निर्मिते रामवाणेऽखिलग्रन्थायो नेत्रसंमितः ॥ * ॥

**विषयः ।** ज्वरादीनां निदानुपायादिकथनम् ॥

---

No. 182. लिङ्गादिसंग्रहटिप्पनी, By रामनाथविद्यावाचस्पतिः. Substance, country-made paper, 12 × 3 inches. Folia, 10. Lines, 7 on a page. Extent, 300 çlokas. Character, Bengali. Date, , ? Place of deposit, District Bardhamāna, Kālnā, Paṇḍita Kānticandra Tarkavācaspati. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय । सन्निकृष्टाक्षैरिति । पाणिनि-वररुचि-चन्द्रप्रभृतिभिर्यानि प्रणीतानि तत्सूचितैः सन्धादिभिः प्रत्ययैः केवलस्य प्रत्ययस्यासम्भवात् ॥ इत्यादि ।

**End.** पूर्णश्च चन्द्रः कामेन पान्थदृष्टिविषं कृतम् ।
इति दण्डिकाव्ये क्लीवप्रयोगो न्यायसिद्धः ॥

**Colophon.** इति महामहोपाध्याय—श्रीरामनाथविद्यावाचस्पतिभट्टाचार्य्यविरचितायां लिङ्गादिसंग्रहटिप्पन्यां कतिपयार्थः समाप्तः ॥ * ॥ लिखितं श्रीमहेशचन्द्रशर्म्मणा सप्तदशवर्षसमये चण्डिगाछायां स्थित्वा । चौरोऽस्य विष्ठाभुक् ॥

**विषयः ।** लिङ्गादिसंग्रहनामकग्रन्थस्य व्याख्यानम् ।

---

No. 183. वशिष्ठसंहिता. Substance, country-made paper, 13 × 5 inches. Folia, 9. Lines, 9 on a page. Extent, 250 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Roāil grāma, Bābu Yogīndranātha Rāya. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
इत्युक्तो योगिना योगी वशिष्ठेन महात्मना ।
शक्तिः पुत्रो महात्मानं पप्रच्छ पितरं पुनः ॥
यद्यात्मा निर्गुणः शान्तः सदानन्दोऽजरामरः ।
संसृतिः कस्य तातस्य चेत्तनाशे कथं स्मृतिः ॥ इत्यादि ।

**End.** शून्यतामभ्यसेन्नित्यं सर्व्वारम्भविवर्जिताम् ।
भावाभावविनिर्मुक्ता समाहितः ... ... ।
सोऽपि तत्त्वो विशेषेण मृत्युजिद्योगविद्भवेत् ॥ * ॥

**Colophon.** इति वाशिष्ठे योगकाण्डेऽष्टमोऽध्यायः ॥

**विषयः ।** योगकथनम् । राश्यादियोगे शुभाशुभफलादिकथनञ्च ।

---

**No. 184.** वाक्यगोविन्दः. By श्रीरामेश्वरसेनः. Substance, country-made paper, 14×3 inches. Folia, 39. Lines, 7 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, Sana 1210. Place of deposit, District Ḍhākā, Aḍāihājār, Paṇḍita Candrakānta Vidyālaṇkāra. Appearance, tolerable. Prose. Incorrect.

**Beginning.** ॐ नमो गणपतये ।

प्रणम्य परमात्मानं सच्चिदानन्दविग्रहम् ।
करोति वाक्यगोविन्दं ग्रन्थं गोविन्दरञ्जकम् ॥

वाक्यलक्षणमाह । लक्षणत्वसाधारणवचनं यथा गोः सास्नावत्त्वं । तिङ्-सुवन्तचयो वाक्यं । तिङन्तचयो यथा पचति गच्छति पठति । सुवन्तचयो यथा पटुरयं भिक्षुः । उभयचयो यथा काष्ठैः स्थाल्यामोदनं पचति गोविन्दः इत्यन्ये । कारकान्विता क्रिया वाक्यं यथा कुञ्जरं गच्छति गोविन्द इत्यपरे । योग्यताकाङ्क्षासन्निधियुक्तं पदकदम्बकं वाक्यं यथा वृन्दावनं गच्छति कृष्णः इत्यत्र वृन्दावनकर्म्मकगमनानुकूलव्यापाराश्रयः कृष्णः । इत्यादि ।

**End.** अत्र यदि शब्दस्यासत्त्वं कालविशेषस्यार्थः असत्त्वञ्च अभावप्रतियोगित्वं ततश्च धात्वर्थे अन्वेति अभावे प्रथमान्तार्थोऽधिकरणत्वे नान्वेति । एवञ्च शिष्टाः स्वष्टत्वभावप्रतियोगित्वे तु भूतातीतकोमलीभवनप्रकारकप्रसञ्जनविषयाः तत्कालीन ... ... ... ... । एवं यद्ययं निर्वह्निः स्यात् तदा निर्धूमः स्यात् इति ... ... । ... ... ... ... यदि वर्षसहस्रमजीविष्यं तदा पुत्रपौत्रमजनिष्यमित्यादिकम् ॥

विनायकसुतः श्रीमान् धन्वन्तरिवदाहृतः ।
तत्पौत्रस्तु विष्णुसेनस्तस्माद् भीष्मुरजायते ॥
भीष्मुपुत्रास्त्रयो जाता रविसेनस्तथोज्ज्वलः ।
रामसेनसमाख्यात उज्ज्वलो मध्यमोऽभवत् ॥
तद्भवः श्रीधरस्तस्माच्छाम्भिसेन उदाहृतः ।
तद्वंशे नीलकण्ठश्च रामकृष्णस्तदुद्भवः ॥
तद्वंशे जायते श्रील माधुसूदनिरेव च ।
श्रीरामेश्वरसेनेन काञ्चापल्लीनिवासिना ।
तेन तेनेरितानेन वाक्यगोविन्दसंज्ञकः ॥ (?)

**Colophon.** इति श्रीरामेश्वरसेनकृते वाक्यगोविन्दव्याकरणे सिद्धान्तकण्ठाख्यानर्मिकपर्व समाप्तम् ॥ दुर्गा । सन् १२१० साल ॥

विषयः । प्रथमं वाक्यलक्षणम् । तत्र योग्यताकाङ्क्षासत्तिनिरूपणम् । तात्पर्य्यवर्णनम् । पदनिरूपणम् । शब्दभेदकथनम् । शक्तिनिरूपणम् । अभिधालक्षणाव्यञ्जनाशक्तिनिरूढनिरू-पणम् । अथ कारकनिरूपणम् । तत्र कर्तृ कर्म करण चैतु सम्प्रदान-अपादान-अधिकरण-निरूपणम् । अथ विशेषण विशेष्यनिरूपणम् । लिङ्गनिरूपणम् । अनुकरणनिरूपणम् । समास-निरूपणम् । नञ्निरूपणम् । सम्बोधननिरूपणम् । आख्यातस्य शक्तिनिरूपणञ्चेति ॥

---

**No. 185.** वाक्यतत्त्वम् . By सिद्धान्तपञ्चाननः. Substance, country-made paper, 13×3 inches. Folia, 27. Lines, 6 on a page. Extent, 550 çlokas. Character, Bengali. Date, ? Place of deposit, District Bariçāla, Mānapāsā, Paṇḍita Govindacandra Çiromaṇi. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
आलोक्य तन्त्राणि बहूनि यत्ना-
श्रुत्वा च पादौ शिवयोर्गुरूणाम् ।
सिद्धान्तपञ्चानन एष धीरो
वाक्यस्य तत्त्वं सुगमं तनोति ॥
अथ वाक्यं नानापदार्थविषयकम् ॥ इत्यादि ।

**End.** विधिद्वयकल्पने तन्मूलीभूतश्रुतिद्वयकल्पने च गौरवं स्यात् । इति युक्तयुक्-पञ्चाननः । अन्यत्तु सुधीभिर्बोध्यं विवेचितञ्चेदं हरकर्णटीकायां अस्माभिः ॥

**Colophon.** इति श्रीसिद्धान्तपञ्चाननभट्टाचार्य्यविरचिते दैतत्त्वे वाक्यतत्त्वं समाप्तम् ।

विषयः । नानापदार्थघटितत्वेन वाक्यविचारमुखेन वाक्यस्य यथार्थकथनम् ।

---

**No. 186.** विख्यातविजयः. By लक्ष्मणमाणिक्यदेवः. Substance, Palm-leaf, 14×1½ inches. Folia, 108. Lines, 3 on a page. Extent, 1,300 çlokas. Character, Bengali. Date, Sk. 1677. Place of deposit, Kumillā, Paṇḍita Ānandacandra Tarkavāgīça. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** विद्याभिर्नरसिंहो निखिलनयगुणश्रुतिहेतेन्द्रवंशः-
आधत्रिलोकवेरोषदशितधनरञ्जःपुण्यपंक्तिधन्यो ।

पातु त्वां कैशराग्रप्रपद्मनखशिखायोमपद्मप्रताने-
रूर्द्ध्वाधःपीड्यमानप्रशिथिलविषमस्तंभ्यमङ्गुलिस्था ॥

अपि च । दृष्टा घोमिविमत्सर्गंतनिमित्तमञ्चाश्रितमुत्तर्गान्तधैर्य्ये-
स्वच्छान्त्यथं तदैव त्रिभुवनविवरोत्सारिभिः शङ्खजालैः ।
उत्तङ्गैवनमाङ्गे रजनिचरपतेर्दिक्षुनिभ्रो द्रुमभ्य-
स्तौग्रामोदप्रदं वो वल्लिमुपचरतवान् रामचन्द्रः पुनीताम् ॥

नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण । अये किमिदमपूर्व्ववस्तुविलोकनादुत्सावपरीवाचं
विगाहमान इव संहृतोऽस्मि । किञ्चिदुद्ग्रीवमवलोक्य । अहो प्रबलघनघटा-
प्रतिभटदन्तावलपटलघण्टाटोपटङ्कारतिरस्कृतान्यध्वनयो दिग्विभागा वर्तन्ते॥

प्रविश्य पारिपार्श्विकः । भाव विजयतां विजयतां जगदुत्तरङ्गतिमत्तया ।

सूत्रधारः । मारिष विजयसम्भावनाविशेषः प्रस्तूयताम् ।

पारिपार्श्विकः । अद्य खलु कुरुक्षेत्रयात्रासमाङ्गतमहीपतिमण्डलमुकुटमाणिक्यभूतैर्भूपतिभि
र्भारतायोधनभूविलोकनप्रादुर्भूतोद्दीपनविभावैः संभूय सन्दिष्टा अस्मद्-
गुरवो मनोहरमिश्राः यत् त्वं मनोहरतया विश्रुतोऽपि तदुत्साहस्थायि-
प्रबन्धप्रयोगविधाक्षतया हृतोऽस्माभिर्नाट्यानुसारिणीं क्रियां प्रतिपाद-
यस्वेति ।

पारिपार्श्विकः । तदनुकारी कतमः प्रबन्धोऽनुसन्धीयते सतीर्थ्यप्रतीक्षेय ।

सूत्रधारः । यादृक् समुचितोऽयं समावेशः ।
प्रेक्षावत्परितोषनिस्तुषमहामाणिक्यरत्नाकरः
वाक् सत्पूरुषपीयषोत्करकथाम्नोतस्वतीभूधरः ।

End. ...तुरीमधुकरीप्रागल्भ्यपुण्याकरः
विदग्धस्थले वा... भिनवस्तादृक् प्रबन्धोत्तरः ॥
वादाव वाधेति ...
शिक्षादिपदस्योपलक्षण... वीररसस्य चेत् ।
इचेतो वाधाशिक्षोरन्यतरस्... ः नमः ॥
आव ग्रानेति ॥
...पतिबद्धानि दृश्यकाव्यानि बहून्यनुवर्तन्ते ,
श्रीकालीपदपङ्कजेऽस्तु सततं चेतो मद... नाम नाटकं काव्योत्यमिव सभाविर्त
कायः क्षेमसखोऽस्तु तव परमे पूजावि...
वाचस्तद्गुणराशिगाङ्गसलिले मग्नाः ... किमतः परं प्रियमस्ति ।
सोऽयं तन्मकरन्दसुन्दरसुधां नित्यं पि... नः साम्प्रतं

प्रत्याशानविभङ्गनिश्चितमतिः श्रीकार्णवे मज्जितः ।
विख्यातो विजयः स्थितो समजनि श्रीकृष्णतीपच्चया-
द्दद्यैव स्थिरदाकयेऽस्मि भवता भद्रासने स्थापितः ॥

तथापीदमस्तु ।

श्रीमन्नरेन्द्रनिर्म्मलनयैर्निर्मूलितोपद्रवा
क्षोण-क्षेम-कृतघ्न-दुर्जन-शठैः, शून्यास्तु सर्व्वंसहा ।
अस्माकं भुवि सत्प्रसङ्गवचनैरा विश्वविध्वंसनात्
चित्तं चन्द्रकलाकिरीटचरणे स्थेयात् स्थिरं मादृशः ॥
ईदृक् काव्यं प्रणेतुः प्रतिहतरिपवः सन्तु गोत्रप्रसूताः
श्रोतॄणां पश्यताञ्च प्रथयतु परमाह्लादमर्केन्दुचूडः ।
भूयात् कीर्त्तिर्धनाप्तिर्हृदमभिनयतां प्रत्यहं नर्त्तकानां
व्याकल्पान्तं प्रबन्धः स्फुरतु कृतधियां कौमुदीवामनेन्दो ॥

सर्व्वे एवमस्त्विति निष्क्रान्ताः ॥

**Colophon.** इति श्रीश्रीयुतलक्ष्मणमाणिक्यदेवविरचिते विख्यातविजयनामनाटके महोत्सवो नाम षष्ठोऽङ्कः ॥ शुभमस्तु १६७७ ।

**विषयः ।** अस्त्यस्मिन् विख्यातविजयनामनाटके परिस्फुटः कर्णस्य निधनवृत्तान्तः । तत्र प्रथमेऽङ्के सहदेवस्य श्रीकृष्णानयनाय द्वारकागमनं श्रीकृष्णानयनञ्च । द्वितीयेऽङ्के कर्णशल्ययो-र्वाग्विरोधः । नकुलेन सह कर्णस्य युद्धं नकुलस्य निग्रहश्च । तृतीयेऽङ्के कर्णवधार्थं युक्तेनुत्-वामामृत्युयोगः । चतुर्थेऽङ्के कर्णार्जुनयोर्द्वैरथयुद्धारम्भः । पञ्चमेऽङ्के गाण्डी- टीकायां अस्माभिः ॥ प्रति धनञ्जयस्य क्रोधः श्रीकृष्णेन तस्योपशमनं कर्णनिधनञ्च ... इति तत्त्वे वाक्यतत्त्वं समाप्तम् । न्दितानां पाण्डवानामानन्दप्रकाश इति ।

—— शब्दस्य यथार्थकथनम् ।

**No. 187.** विभक्तितत्त्वम् . Substar ——
Folia, 38. Lines, 12 on a page. F
Date, Sana. 1235. Place of
Içānacandra Smṛtipañcānanr

By लक्ष्मणमाणिक्यदेवः. Substance, Palm-
108. Lines, 3 on a page. Extent, 1,300
i. Date, Sk. 1677. Place of deposit, Kumillā,
kavāgiça. Appearance, tolerable. Prose and

**Beginning.** ॐ नमो गणेश।

प्रणम्य गौरीमनु

गुणच गौर्यैकनिदृशी निखिलमवनुखनुपदैत्येन्द्रचक्र-
चलितचमरजःपुञ्जपंक्तिचयनो ।

विभक्तितत्त्वार्थमिदं विचित्रं
तनोति चेतोः कृपया चि धातुः ॥
प्रथमा । श्रीकरणं चि शक्तिप्रापकम् । इत्यादि ।

**End.** नामलक्षणं नाम्ना पदेनेति यत्र निर्द्देशस्तत्र पदेन च समास इति ॥ ० ॥

**Colophon.** इति विभक्तितत्त्वं समाप्तम् ॥ सन १२१५ ।

**विषयः ।** प्रथमादिविभक्तीनामर्थादिनिरूपणम् ।

---

**No. 188.** विरुद्धजागदीशी. Substance, country-made paper, 18 × 3½ inches. Folia, 17. Lines, 9 on a page. Extent, 800 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinīpura, Post Office Khaḍāra grāma Kurāna, Paṇḍita Ambikācaraṇa Vidyāsāgara. Appearance, new. Prose. Correct.

**Beginning.** श्रीदुर्गा । नचिरुद्धमते सर्व्वमनित्यं प्रमेयत्वादित्यादिलक्षणत्वात् तत्रानित्यत्वप्र मिथाननसङ्गतमत आह सम्प्रदाय इति + × × सर्व्वमनित्यं प्रमेयत्वात् भूमित्या गन्धवत्त्वादित्यादावसाधारण्यानुपसंहारित्वाविव्यर्थः चये सिद्धान्ते ननु निश्चितत्वं यदि साध्यवद्भिन्नेऽव्यन्वितं तदानुपसंहार्य्यो व्याप्ते इत्यादिनापि सपक्षगतत्वांशस्य सार्थकत्वशङ्का विरुध्येत साध्यवद्भिन्नत्वनिश्चयाप्रसिद्धौ वानुपसंहारितादशायामनित्यप्रमक्षवादनसङ्गदनुरोधेन साध्यवन्मात्रान्वयितया निश्चितत्वं व्याचष्टे ॥ इत्यादि ।

**End.** विरुद्धस्थले बाधस्वरूपासिद्ध्योरन्यतरस्यावश्यकत्वात् तत्र क्वाचित्कत्वासम्भवादाह बाधेति चेतुविशेषणासिद्ध्यादिरपि क्वचित् साङ्कर्य्यसम्भवादाश्रयासिद्ध्यादिपदस्योपलक्षणपरत्वमित्याशयेनाह अन्यसङ्करस्त्विति । ननु विरुद्धहेतौ बाधासिद्ध्योरन्यतरस्यावश्यकत्वे तदेवास्तु दूषणं कृतं विरोधेनेत्यत आह ज्ञानेति ॥

श्रीकालीपदपङ्कजेऽस्तु सततं चेतो मदीयं मम
कायः क्षेमसदोऽस्तु तत्र परमे पूजाविधौ सन्ततम् ।
वाचश्चाद्गुणराशिगानरसिकौ मग्नाः सदा सन्तु मे
सोऽहं तन्मकरन्दसुन्दरसुधां नित्यं पिवेयं मुदा ॥

Colophon. इति निरुक्तजागदीशी समाप्ता ॥ श्रीगुरुं वन्दे नित्यम् ।

विषयः । अनुमानचिन्तामण्यन्तर्गतपक्षताभागीयविवरणस्य जगदीशकृता टीका ॥

---

**No. 189.** **विश्वामित्रसंहिता.** Substance, country-made paper, 12 × 3 inches. Folia, 8. Lines, 9 on a page. Extent, 2,500 çlokas. Character, Bengali. Date, ? Place of deposit, District Mānabhūma, Post Office Raghunāthapura Vĕdogrāma, Paṇḍita Veṇkaṭa, Varadācāryya Gosvāmī. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीहरिः । नमो गणेशाय ।

श्रीदेव्युवाच ।

देवदेव जगन्नाथ सर्व्वज्ञ सकलेश्वर ।

भैरवानन्द विश्वात्म सर्व्वप्रिय महेश्वर ।

सौम्येन सर्व्वसिद्धिः स्यात् केनोपायेन भैरव ॥ इत्यादि ।

**End.** अजरे अमरे देवि ब्रह्मयोनि नमोऽस्तु ते स्वाहा ।

नमस्कारं समर्पयामि । इति मूलमन्त्रं त्रिवारं जपित्वा इत्याह भगवान् बौधायनः ॥ ० ॥

**Colophon.** इति विश्वामित्रसंहितायां नानाप्रयोगयोगो नाम दशमोऽध्यायः ॥ ० ॥

विषयः । मन्त्रसाधनादिनिरूपणम् । विघ्नेश्वरादिस्तोत्रम् । प्राणप्रतिष्ठादिनिरूपणम् । मातृकान्यासादिनिरूपणम् । प्रयोगादिश्चेति ।

---

**No. 190.** **विष्णुधर्म्मोत्तरम्. (काण्डत्रयात्मकम्).** Substance, country-made paper, 12 × 7 inches. Folia, 495. Lines, 13 on a page. Extent, 16,000 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Generally correct.

प्रथमकाण्डस्य ।

**Beginning.** श्रीगणेशाय नमः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।

देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

ॐ कृतवर्म्मा तथा भोजः क्षेमो माहिष्मतीपतिः ।
कुलिन्दः सर्व्वदमनो भानुश्चन्द्रवर्धनः ॥
पद्मनाभः सुबोधश्च नन्दीशो हारमत्पतिः ।
जातिसारश्चित्रधन्वा सर्व्वो वायुरथस्तथा ॥
द्रविडः कुसुमापीडो + +. + समरप्रियः ।
शम्भुः किरातराजश्च × × × नन्दिवर्द्धनः ॥
एते चान्ये च राजानः शतशो बहुदक्षिणाः ।
सम्पूर्णचन्द्रवदना नागराजः पुरोरवः ॥
उपासाञ्चक्रिरे वत्सं सिंहासनगतं नृपाः ।
बहुभिर्भूमिपालैश्च तथा वत्सेन भूभुजा ॥
युधिष्ठिरेण च सभा शोभिता शुशुभे सदा ।
राजानस्ते ततो दृष्ट्वा ऋषीन् दुर्लभदर्शनान् ॥
शक्रलोकस्थमात्मानममन्यन्त यशोभृतः ।
ऊचुस्ते प्रणयाद् वाक्यं वत्सं भूरिसत्त्वदम् ॥
दुर्लभं दर्शनं यत्र ऋषिसङ्घे महीक्षिताम् ।
तस्मात् त्वं राजशार्दूल प्रष्टुमर्हो द्विजोत्तमम् ॥
वैष्णवान् विविधान् धर्म्मान् सरहस्यान् ससङ्ग्रहान् ।
इत्येवमुक्तो वत्सस्तु त्यक्त्वा सिंहासनं तदा ॥
वत्सन्तु प्राञ्जलिं दृष्ट्वा सर्व्व एव नराधिपाः ।
वरासनान् विहायाथ तस्थुः प्राञ्जलयस्तदा ॥

वत्स उवाच ।

भवद्भिर्नृपसिंहाश्च त्वर्थिता ये द्विजाः श्रुताः ।
अनुग्रहार्थं भूपानां जगतो हितकाम्यया ॥
भवन्तो वक्तुमर्हन्ति विष्णुधर्म्मान् सनातनान् ।
तस्मात् × + युगे नास्ति भवतां दर्शनं नृपैः ॥

ऋषय ऊचुः ।

उत्तिष्ठ त्वं महीपाल त्वलङ्कुरु स्वमासनम् ।
अवश्येऽपि वयमत्र विशेषेणार्थिनो नृप ॥
वद ते संशयान् सर्व्वान् छेत्स्यत्येष महामुनिः ।
इत्येवमुक्त्वा वत्सन्ते ऋषयस्तपसि स्थिताः ॥

मार्कण्डेयमथोचुस्ते भूमिं धर्म्मान् महीपतेः ।
वैष्णवान् विविधान् धर्म्मान् लोका + परायणाः ।
तथा पार्थिवसङ्घस्य संशयान् मनसि स्थितान् ॥ इत्यादि ।

द्वितीयकाण्डस्य प्रारम्भवाक्यम् ।

ॐ स्वस्ति प्रजाभ्यः । ॐ गणेशाय नमः ।
ॐ गुरवे नमः । ॐ प्रथमश्रीविष्णुधर्म्मोत्तरेषु द्वितीयकाण्डं लिख्यते ॥
ॐ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
ॐ वज्र उवाच ।
ॐ प्रश्नो भगवता प्रोक्तो विजये भरतस्य मे ।
यच्छ्रुत्वा वेद्मि चात्मानं प्रश्नम् विगतकल्मषम् ॥
श्रुत + च श्रुयश्च कथासारस्तु भार्गव ।
कथाश्च विविधाः प्रोक्तास्तत्प्रसङ्गात् तथा त्वया ॥ इत्यादि ।

तृतीयकाण्डस्य प्रारम्भवाक्यम् ।

ॐ नमो भगवते वासुदेवाय ।
वज्र उवाच ।
किं कर्त्तव्यं मनुष्येण किं कुर्व्वन् सुखमेधते ।
अस्मिन् लोके परे चैव केनायाति महत् सुखम् ॥
मार्कण्डेय उवाच ।
अन्तर्वेदि बहिर्वेदि पुरुषेण विजानता ।
देवतापूजनं कार्य्यं लोकद्वयमभीप्सता ॥ इत्यादि ।

End. प्रथमकाण्डस्य ।

एतत् तदुक्तं विजयं मया ते रघाजिरे राघवनन्दनस्य ।
श्रोतव्यमेतन्नियमेन पुंसां विज्ञानधर्म्मार्थयशोऽभिरामम् ॥

Colophon. इति श्रीविष्णुधर्म्मोत्तरेषु मार्कण्डेय वज्रसंवादे श्रीरामचन्द्रभरतसमागमो नाम एकोनसप्ततितमोऽध्यायः । १६९ । समाप्तश्चायं प्रथमः काण्डः ।

End. द्वितीयकाण्डस्य ।

अग्निनो रक्षणार्थाय वर्ज्जितोऽपि नियोजयेत् ।

कार्य्यं सर्व्वमसम्बाधं तथा तोरणरक्षणम् ॥
योजना च तथा कार्य्या यथा न स्याद् व्यतिक्रमः ।
सम्बाधश्च तथा राम न भवेच्च परस्परम् ।
तवैव सर्व्वमुक्तं संक्षेपतो भार्गववंशमुख्य ।
एतत्तु ज्ञात्वापि नरः स युद्धे जयत्यवश्यं समुपार्जिते च ॥

Colophon. इति श्रीविष्णुधर्म्मोत्तरेषु मार्कण्डेय-वज्रसंवादे रामं प्रति पुष्करोपाख्याने धनुर्वेदे षष्ठोऽध्यायः । द्वितीयं काण्डं समाप्तम् ।

End. तृतीयकाण्डस्य ।

यथेष्टमूर्त्तिगं देवं सर्व्वकालमथार्च्चयेत् ।
तस्य सर्व्वा तिथि र्यस्मात्सर्व्वात्मनो जगद्गुरोः ॥
स सर्व्वशक्तिर्भगवान् महात्मा
पूज्यः सदा भक्तिमुपेत्य राजन् ।
सम्पूजनं देववरस्य तस्य
भक्तिः प्रधाना न हि कालयोगः ॥

Colophon. इति श्रीविष्णुधर्म्मोत्तरे मार्कण्डेय वज्रसंवादे कालनियमपूजा समाप्ता ॥
तृतीयकाण्डः समाप्तः ।

**विषयः** । इति श्रीविष्णुधर्म्मोत्तरे मार्कण्डेय-वज्रसंवादे प्रथमकाण्डे कथाप्रस्तावनं नाम प्रथमोऽध्यायः । हिरण्यगर्भोत्पत्तिर्नाम २ योऽध्यायः । वराहप्रादुर्भावो नाम ३ । पाताल-वर्णनम् ४ । लोकवर्णनम् ५ । द्वीपविभागवर्णनम् ६ । जम्बूद्वीपवर्णनम् ७ । भारतवर्ष-वर्णनम् ८ । जनपदवर्णनम् ९ । सप्तगिर्य्युत्थनदीवर्णनम् १० । हिमवन्नदीवर्णनम् ११ । कोशलवर्णनम् १२ । अयोध्यावर्णनम् १३ । इक्ष्वाकुवर्णनम् १४ । मधुकैटभवधोपाख्यानम् १५ । धुन्धुमारोपाख्यानम् १६ । सगरोपाख्यानम् १७, १८ । गङ्गावर्णनम् १९ । जह्नुकन्योपाख्यानम् २० । त्रिविक्रमोपाख्यानम् २१ । गङ्गाख्यातिर्नाम २२ । अर्जुनोपाख्यानम् २३ । हयवधोपाख्यानम् २४ । दत्तात्रेयोपाख्यानम् २५ । पृथ्वीप्राक्लोकगमनम् २६ । ब्रह्मलोकगमनम् २७ । हरदर्शनम् २८ । नक्षत्रदर्शनम् २९ । आदित्यदर्शनम् ३० । वनदाहो नाम ३१ । वाक्यागुरुत्पत्तिर्नाम ३२ । चक्रविपर्य्यासो नाम ३३ । कुशिकवरप्रदानम् ३४ । रामोत्पत्तिर्नाम ३५ । रामस्य माहेश्वरादेशो नाम ३६ । औत्पातिकं नाम ३७ । शुक्रशाल्वसंवादः ३८ । सप्ताध्यायो नाम ३९ । समुद्रमथने लक्ष्मीसम्बोधनम् ४० । अमृतमथनम् ४१ । अमृतविभागो नाम ४२ । राहुवक्त्रं नाम ४३ ।

शाल्ववाक्यं नाम ४४ । भार्गवरामयुद्धे शाल्वनिर्व्वाणम् ४५ । शाल्वसेनादुर्निमित्तदर्शनम् ४६ । युद्धे भार्गवरामदर्शनम् ४७ । शाल्वसैन्यवधो नाम ४८ । शाल्ववधो नाम ४९ । वरप्राप्ति-र्नाम ५० । परशुरामोपाख्याने शङ्करगीतासु रामप्रश्नः ५१ । भार्गवरामप्रश्ने शङ्करगीतासु विष्णुं प्रति शङ्करचिन्तनम् ५२ । रामं प्रति शङ्करगीतासु वराहप्रादुर्भावे हिरण्याक्षवधो नाम ५३ । हिरण्यकशिपुवधे नरसिंहप्रादुर्भावो नाम ५४ । रामं प्रति शङ्करगीतासु बलिबन्धने वामनप्रादुर्भावो नाम ५५ । शङ्करगीतासु विभूतिर्नाम ५६ । भक्तिफलं नाम ५७ । भक्तिलक्षणं नाम ५८ । उपवासफलं नाम ५९ । उपवासविधिर्नाम ६० । अभि-गमनकालो नाम ६१ । उपादानकरणं नाम ६२ । इज्याकालविधिर्नाम ६३ । स्वाध्यायकालो नाम ६४ । शङ्करगीता समाप्ता ६५ । रामं प्रति शङ्करानुशासनम् ६६ । वैष्णवधनुष्प्रादुर्भावो नाम ६७ । अश्मनगरदर्शनम् ६८ । वरुणादिदर्शनं नाम ६९ । अयःशङ्कुदानववधो नाम ७० । वरुणस्तोत्रं ७१ । अर्कादिमासवर्णनं नाम ७२ । कालसंख्यानम् ७३ । युगान्तवर्णनम् ७४ । जग-दवस्थावर्णनम् ७५ । कल्पान्तवर्णनम् ७६ । महाकल्पवर्णनम् ७७ । वासुप्रभाववर्णनम् ७८ । पद्मनाभोपाख्यानम् ७९ । यातकालवर्णनम् ८० । कल्पसादृश्यवर्णनम् ८१ । बूकाल (?) निर्देशो नाम ८२ । कालावयवदैवतं नाम ८३ । षड्वर्गनिर्णयो नाम ८४ । ग्रहशुभाशुभनिर्णयो नाम ८५ । प्रतिदेशं पीड़ाशान्तं नाम ८६ । प्रतिपुरुषं शुभाशुभनिर्णयो नाम ८७ । ग्रह-चंमपञ्चनिर्देशो नाम ८८ । नवग्रहस्नानं नाम ८९ । ग्रहार्च्चपूजाविधिर्नाम ९० । ग्रहनक्षत्र-स्नानविधिर्नाम ९१ । अग्निकार्य्ये प्राक्तनोत्तरतन्त्रविधिर्नाम ९२ । ग्रहपूजाविधानम् ९३ । मण्डल-कल्पना ९४ । ग्रहार्च्चावाहनमन्त्राध्यायो नाम ९५ । अनुलेपनं नाम ९६ । ग्रहार्च्चपुष्पदेयाध्यायो नाम ९७ । ग्रहार्च्चधूपदेयाध्यायो नाम ९८ । ग्रहनक्षत्रनैवेद्यदेयाध्यायो नाम ९९ । प्रतिग्रह-र्च्चदेयादेशो नाम १०० । होमद्रव्यविभागो नाम १०१ । होममन्त्रकथनम् १०२ । दक्षिणाविधा-नम् १०३ । प्रति + + आशीर्वादाध्यायो नाम १०४ । ग्रहशान्तिर्नाम १०५ । ग्रहसम्भवकथ-नम् १०६ । ग्रहार्च्चादिसम्भवो नाम १०७ । पृथूद्भवो नाम १०८ । पृथ्व्यभिषेको नाम १०९ । छाया-यत्युत्पत्तिर्नाम ११० । भृगुवंशकीर्त्तनं नाम १११ । अङ्गिरोवंशकीर्त्तनं नाम ११२ । अत्रिवंशानु-कीर्त्तनं नाम ११३ । विश्वामित्रवंशानुकीर्त्तनं नाम ११४ । कश्यपवंशानुकीर्त्तनं नाम ११५ । वशिष्ठवंशानुकीर्त्तनं नाम ११६ । पराशरवंशानुकीर्त्तनं नाम ११७ । अगस्त्यवंशानुकीर्त्तनं नाम ११८ । धर्म्मवंशानुकीर्त्तनं नाम ११९ । आदित्योत्पत्तिर्नाम १२० । दिव्यवंशानुकीर्त्तनं नाम १२१ । अग्निस्तोत्रं नाम १२२ । वायुस्तोत्रं नाम १२३ । भगवद्दर्शनं नाम १२४ । कालनेमीवधो नाम १२५ । वराहप्रादुर्भावो नाम १२६ । माधवोत्पत्तिर्नाम १२७ । कश्यपसर्गो नाम १२८ । उर्व्वशीसम्भवो नाम १२९ । उर्व्वशी-रम्भासंवादो नाम १३० । क्रीड़ावतारणं नाम १३१ । चन्द्रोदयवर्णनं नाम १३२ । उर्व्वशी-पुरूरवःसमागमो नाम १३३ । उर्व्वशीसम्भोगो नाम १३४ । पुरूरवःप्रलापो नाम १३५ । त्रेताग्न्युत्पत्तिर्नाम १३६ । पुरूरवःस्वर्गप्राप्तिर्नाम १३७ । पितृगण-

कीर्त्तनं १३८ । श्राद्धोत्पत्तिर्नाम १३९ । श्राद्धविधिः १४० । श्राद्धद्रव्यविनिर्णयः १४१ । श्राद्धकाल-निर्णयः १४२ । पात्रापात्रपरीक्षा १४३ । श्राद्धदेशानुकीर्त्तनं १४५ । वृषभलक्षणं नाम १४६ । वृषोत्सर्गविधिः १४७ । पुरूरवस्तपोवर्णनं १४८ । ऐरावतीवर्णनं १४९ । हिमवद्वर्णनं १५० । गन्धर्व्वाश्रमवर्णनं १५१ । आयतनवर्णनं १५२ । अप्सरोजलक्रीडावर्णनं १५३ । पुरूरवसोऽभि-दर्शनं १५४ । रूपसत्रकरणं नाम १५५ । पुरूरवश्चरितवर्णनं १५६ । राज्यप्रदाद्वादशीविधिः १५७ । प्रकामाद्वादशीविधिः १५८ । शुक्लपक्षद्वादशीविधिः १५९ । कृष्णपक्षद्वादशीविधिः १६० । श्रवणाद्वादशीप्रशंसा १६१ । श्रवणाद्वादशीकथामाहात्म्यम् १६२ । तिलद्वादशीप्रशंसा १६३ । तिलद्वादशीकथा १६४ । गायत्रीमाहात्म्यं १६५ । दीपदानप्रशंसा १६६ । दीपमाहात्म्ये ललित कोपाख्यानं १६७ । पुष्पाहरणफलं १६८ । उपलेपनफलं १६९ । मान्धाताख्यानं नाम २७० । पुरुषस्वरूपवर्णनं १७१ । प्रादुर्भावस्वरूपवर्णनं १७२ । अनन्तव्रतमाहात्म्यं १७३ । मासनक्षत्रपूजनं १७४ । शक्रचरिताख्यानं १७५ । शक्रं प्रति शाम्बरायणीवाक्ये प्रथमं मन्वन्तरं नाम १७६ । शक्रं प्रति शाम्बरायण्युपाख्याने द्वितीयमन्वन्तरकथा नाम १७७ । तृतीयमन्वन्तरं नाम १७८ । चतुर्थ-तामसवर्णनं नाम १७९ । इन्द्रशाम्बरायणीकथायां पञ्चमरैवतमन्वन्तरवर्णनं नाम १८० । षष्ठ-मन्वन्तरवर्णनं नाम १८१ । सप्तमवैवस्वतमन्वन्तरं नाम १८२ । अष्टममन्वन्तरवर्णनं नाम १८३ । नवममन्वन्तरवर्णनं नाम १८४ । दशममन्वन्तरवर्णनं नाम १८५ । एकादश-द्वादश-त्रयोदश-चतुर्दशमन्वन्तरवर्णनं नाम १८६, १८७, १८८, १८९ । अनेकविष्णुप्रादुर्भावो नाम १९० । शक्र-शाम्बरायणीकथासमाप्ति १९१ । स्तुतिमाहात्म्यं १९२ । गन्धर्व्वयोर्गजमकरीकरणं १९३ । गजेन्द्र-मोक्षणं १९४ । विष्णुपञ्जरस्तोत्रं १९५ । सर्व्वबाधाप्रशमनस्तोत्रं १९६ । यक्षोत्पत्तिर्नाम १९७ । ऐक्ष्ववंशवर्णनं १९८ । च्यवनोत्पत्तिर्नाम १९९ । प्रैक्ष्ववंशानुकीर्त्तनं २०० । शैलूषपूजावर्णनं २०१ । भरतप्रख्यानं नाम २०२ । अनुयात्रिकं नाम २०३ । भरतनिर्याणं नाम २०४ । प्रयाणकवर्णनं नाम २०५ । गङ्गोत्तारो नाम २०६ । राजगृहागमनं नाम २०७ । राजगृहप्रवेशो नाम २०८ । आजविकं नाम २०९ । गन्धर्व्वसभाक्षोभो नाम २१० । गन्धर्व्वगर्जनं नाम २११ । शैलूषं प्रति + + गुप्ताषणं नाम २१२ । अगस्त्यमाहात्म्यं २१३ । समुद्रवर्णनं २१४ । देवताप्रयोजनं नाम २१५ । राक्षससैन्यनिर्याणं २१६ । शालिराक्षसवधः २१७ । राक्षसपातालप्रवेशो नाम २१८ । वैश्रव-णाख्यानं २१९ । रावणवरप्राप्तिर्नाम २२० । रावणभूलोकविजयो नाम २२१ । स्वर्गविजयो नाम २२२ । त्रयोविंश-चतुर्व्विंशाध्यायौ खण्डितौ । त्रिपुरदाहवर्णनं २२५ । अन्धकजयः २२६ । मातृबाधाप्रतिषेधो नाम २२७ । कृत्तिकापूजा नाम २२८ । अक्षयतृतीयामाहात्म्यं २२९ । यक्षो-त्पत्तिर्नाम २३० । यक्षलिङ्गवर्णनं २३१ । यक्षवधप्रतिषेधो नाम २३२ । महिषासुरवधः २३३ । दैवयज्ञविध्वंसो नाम २३४ । दक्षयज्ञविध्वंसो नाम २३५ । कामदाहो (?) नाम २३६ । विष्णु-कवचं २३७ । वक्षिराक्षससमागमो नाम २३८ । रावणमहापुरुषदर्शनं २३९ । वसन्तवर्णनं २४० ।

ग्रीष्मवर्णनं २४१ । लवणवधे शत्रुघ्नं प्रति रामानुशासनं २४२ । प्रावृट्-शरद्-हेमन्तवर्णनं २४३ । २४४ । २४५ । शत्रुघ्नप्रस्थानं २४६ । लवणवधः २४७ । पुष्करवंशवर्णनं २४८ । राजकीर्त्तनं २४९ । शक्राभिषेकवर्णनं २५० । गजोत्पत्तिर्नाम २५१ । वानरोत्पत्तिर्नाम २५२ । गजवानरयुद्धं २५३ । गन्धर्व्वप्रेषणं २५४ । विरहिणीवर्णनं २५५ । २५६ । निशोपभोगवर्णनं २५७ । गन्धर्व्वसैन्यनिर्याणं २५८ । २५९ । सङ्कुलयुद्धं नाम २६० । द्वन्द्वयुद्धं नाम २६१ । तृतीयदिवसयुद्धं नाम २६२ । चतुर्थदिवसयुद्धं नाम २६३ । पञ्चमदिवसयुद्धं नाम २६४ । षष्ठदिवसयुद्धवर्णनं २६५ । शैलूष-वध २६६ । रणभूमिवर्णनं २६७ । गन्धर्व्वस्त्रीविलापो नाम २६८ ॥ ० ॥ इति श्रीविष्णुधर्म्मोत्तरेषु मार्कण्डेय-वज्रसंवादे श्रीरामचन्द्र-भरतसमागमो नाम २६९ अध्यायः ॥ इति प्रथमकाण्डस्य ॥ इति श्रीविष्णुधर्म्मोत्तरेषु द्वितीयकाण्डे मार्कण्डेय वज्रसंवादे रामं प्रति पुष्करागमनं नाम प्रथमोऽध्यायः ॥ रामं प्रति पुष्करवाक्येषु राजप्रशंसा नाम २ अः । राजलक्षणं नाम ३ । साम्वत्सरिकलक्षणं नाम ४ । इति पञ्चमोऽध्यायः ॥ मन्त्रिलक्षणं ६ । महिषीलक्षणं ७ अः । पुरुषलक्षणं ८ । स्त्रीलक्षणं ९ । हस्तिलक्षणं १० । अश्वलक्षणं ११ । चामरलक्षणं १२ । छत्रलक्षणं १३ । भद्रासनलक्षणं १४ । रत्नलक्षणं १५ । चापबाणलक्षणं १६ । खड्गलक्षणं १७ । राज्याभिषेककालो नाम १८ । मन्त्रनिर्द्देशो नाम १९ । वह्निलक्षणं २० । राज्ञोऽभिषेकविधिः २१ । २२ । तीर्थफलवर्णनं २३ । २४ । २५ । षड्वर्गसम्पत्तिर्नाम २६ । अगदङ्काराध्यायो नाम २७ । राजरक्षाध्यायः २८ । वास्तुविद्या २९ । धनुर्वेदो नाम ३० । सुरपूजादिमाहात्म्यं ३१ । ब्राह्मणप्रशंसा ३२ । साध्वीमाहात्म्यं ३३ । स्त्रीधर्म्माध्यायः ३४ । स्त्रीदेवतापूजनाध्यायः ३५ । सावित्र्युपाख्यानम् ३६—४१ । गोमाहात्म्यं ४२ । गवां चिकित्सितं ४३, ४४ । अश्वप्रशंसा ४५ । अश्वचिकित्सा ४६ । अश्वानां शान्तिकर्म्मविधानं ४७ । गजप्रशंसा ४८, ४९ । गजानां शान्तिकर्म्मविधिर्नाम ५० । पुरुषप्रशंसा ५१ । बालतन्त्रं नाम ५२ । रोहिणीस्नानं नाम ५३ । पुषीयासप्तमीव्रतं ५४ । पुषीयाष्टमीव्रतं ५५ । ५६ । शतभिषास्नानं नाम ५७ । आरोग्यद्वितीया नाम ५८ । आरोग्यप्रतिपन्नाम ५९ । आरोग्यव्रतं ६० । राजधर्म्मः ६१ । अन्तःपुरचिन्ता नाम ६२ । भोज्यकल्पनं नाम ६३ । गन्धयुक्तिर्नाम ६४ । राजधर्म्माध्यायो नाम ६५ । पुरुषकाराध्यायो नाम ६६ । सामविधिर्नाम ६७ । भेदविधिर्नाम ६८ । दानविधिर्नाम ६९ । उपायचतुष्टये दण्डप्रशंसा ७० ॥ ७१, ७२ अध्यायौ न दृष्टौ ॥ प्रायश्चित्ताध्यायः ७३ । रहस्यप्रायश्चित्ताध्यायः ७४ । शौचविधिः ७५ । (७६ अध्यायः खण्डितः) प्रेतक्रियाध्यायः ७७ । वर्णधर्म्माध्यायः ८० । शङ्करधर्म्माध्यायः ८१ । आपद्धर्म्माध्यायः ८२ । पूर्व्वाषाढ़ास्नानं नाम ८३ । मूलास्नानं नाम ८४ । संस्काराध्यायः ८५ । ब्रह्मचर्य्याश्रमाध्यायः ८६ । धर्म्माध्यायः ८७ । स्नानाध्यायः ८८ आचाराध्यायः ८९ । देवकर्म्माध्यायः ९० । ९१ । (९२ । ९३ । ९४ अध्यायाः खण्डिताः) गृहस्थधर्म्माध्यायः ९५ । कृत्तिकास्नानं ९६ । मधुमाशनकर्म्माध्यायः ९७ । स्नानसाधारणं नाम ९८

नक्षत्रस्नानं नाम ९९ । अभिजित्स्नानं नाम १०० । पुष्टिकारकश्रवणास्नानं नाम १०१ । जन्मर्क्ष-स्नानं नाम १०२ । बार्हस्पत्यस्नानं नाम १०३ । दिक्पालस्नानं नाम १०४ । विनायकस्नानं नाम १०५ । महेश्वरस्नानं नाम १०६ । भगवद्विष्णुचतुर्विधपुरुषरूपपादोदकस्नानं नाम १०७ । १०८ । मणिबन्धाध्यायः १०९ । काम्यफलाध्यायः ११० । पापनिषयो नाम १११ । गर्भसंक्रान्तिर्नाम । (इतः परमध्यायस्य संख्या नास्ति) भोगदेहवर्णनं नाम०। जन्माध्यायः । शरीरविषयो नामा-ध्यायः । यममार्गवर्णनम् । निरयगामिवर्णनम् । नरकवर्णनम् । तिर्य्यग्योनिवर्णनम्०। नारकि-चिह्नग (?) वर्णनम् । दुर्गतितरणम् । लक्ष्म्याध्यायः । ऋग्विधानम् । यजुर्विधानम् । साम-विधिः । अथर्व्वविधिः । श्रीसूक्तमाहात्म्यम् । पुरुषसूक्तमाहात्म्यम् । बाणप्रस्थाध्यायः । चतुर्थाश्रम-वर्णनम् । शान्तिकर्म्म । अर्चाविकारोपशमनं अग्निविकृतं इन्द्रवैकृतं वृष्टिवैकृतं स्त्रीप्रसूवैकृतं नामा-ध्यायाः । अश्वादिप्रसूतिवैकृतोपशमनम् । मृगपक्षिवैकृतम् । उत्पातप्रशमनम् । मण्डलचिन्ताध्यायः । उपेक्षाध्यायः । इन्द्रजालाध्यायः । षड्गुणाध्यायः । आजस्त्रिकाध्यायः । साम्वत्सरिकाध्यायः । चातुर्म्मास्यविधिः । शक्रध्वजोत्पत्तिः । शक्रध्वजोत्सवः । इन्द्रध्वजगमनम् । शक्रस्तवः । भद्रकाली-पूजा । अश्वमन्त्रः । छत्रमन्त्रः । ध्वजमन्त्रः। हस्तिमन्त्रः । चापमन्त्रः । इतकाम्बल—साम्व-त्सराभिषेक, माङ्गल्य—शकुन—अङ्गविद्या—शाला—आनक—उपकरण-तिथिनक्षत्रप्रकरण-उदयास्त-प्रकरणाध्यायाः । यात्राधिकार—यात्राविधि—साङ्ग्रामिकाध्यायाः । इति द्वितीयं काण्डं समाप्तम् । चित्रसूत्रे प्रथमोऽध्यायः । इति श्रीविष्णुधर्म्मोत्तरेषु तृतीये काण्डे शब्दाध्यायः । इति छन्दोविधि-तन्त्रयुक्तिर्नामाध्यायः । इति अभिधानकोशे प्रथम—द्वितीय—तृतीयपरिच्छेदाः । इति अभिधान-कोशे स्त्रीलिङ्गनिर्देशश्चतुर्थः परिच्छेदः । इति अभिधानकोशे पुंवर्गनिर्देशः पञ्चमः परिच्छेदः । इति अभिधानकोशे नपुंसकविधिर्नाम षष्ठः परिच्छेदः । इति श्रीविष्णुधर्म्मोत्तरेष्वलङ्कारा-ध्यायः । इति महाकाव्यलक्षणं प्रहेलिकालक्षणम् । सामान्याध्यायः, शयनासनस्थानकाख्या-ध्यायः, आसीनकाध्यायः, उत्थितस्थानकाध्यायः, आङ्गिकाध्यायः, उपाङ्गाभिनयाध्यायः, रसा-ध्यायः, + + अभिनयाध्यायः, सामान्याभिनयाध्यायः, प्रचारो नामाध्यायः, नाट्यरसो नामाध्यायः, रहस्यमुद्राध्यायः, मुद्राध्यायः । इति श्रीविष्णुधर्म्मोत्तरेषु तृतीयकाण्डे नृत्यसूत्रं ...ाम् । प्रमाणाध्यायः । चित्रसूत्रे सामान्यमानम् । प्रतिमालक्षणम् । रश्म्यतिकराध्यायः वर्त्तनाध्यायः, कूपाध्यायः । इति वज्रनारदसंवादे नासत्य + + निर्म्माणम् । इति यम रूप (?) निर्म्माणं नाम । इति वरुण + + निर्म्माणं नाम । इति वज्रवैश्रवण + + वर्णनं नाम । इति वज्रध्वज + + वर्णनं नाम । इति वज्रगौरीश्वर + + निर्म्माणं नाम । इति वज्र अग्नि + निर्म्माणं नाम । इति वज्र + + निर्म्माणं नाम । इति वज्रवायु + निर्म्माणं नाम । इति वज्र आकाशनिर्म्माणं—वज्रब्रह्म ... ... निर्म्माणं—वज्र आदित्य ... ... निर्म्माणं—वज्रदेवता ... ... निर्म्माणं—वज्रव्योमनिर्म्माणं—वज्रनरनारायणकल्प + + वर्णनं

नामाध्यायाः ।' इति श्रीरामं प्रति पुष्करोपाख्याने नृसिंहरूपनिर्म्माण—कपिलरूपनिर्म्माण—वराहरूपनिर्म्माण—हयशिरोरूपनिर्म्माण—पद्मरूपनिर्म्माण—लक्ष्मीरूपनिर्म्माण—विश्वरूपनिर्म्माण—देवरूपनिर्म्माणं नामाध्यायाः । इति श्रीरामं प्रति पुष्करोपाख्याने प्रासादलक्षण—सर्व्वतो-भद्रप्रासादलक्षण—सामान्यप्रासादलक्षण—द्वारपरीक्षा—शिलापरीक्षा-इष्टकपरीक्षा नामाध्यायाः । इति वज्रलेप—भूमिपरीक्षा—मण्डपशिलान्यास-ध्वजविधाननामाध्यायाः । इति प्रतिष्ठाकल्पे मण्डो-जारः । इति कालनिर्द्देशनामाध्यायः । इति प्रतिष्ठाकल्पे दीक्षाध्यायः । तोरणाध्यायः । + + पञ्चगव्यविधानाध्यायः । शौचाध्यायः । इति प्रतिष्ठाकल्पे अधिवासाध्यायः । इति आवाहन-विधानं नाम । इति श्रीविष्णुबोधनं नाम । इति श्रीविष्णोरावाहनप्रयोजनं नाम । इति प्रतिष्ठाध्यायः । इति भोगाङ्गनाध्यायः । इति शान्तेर्ध्याध्यायः । इति तोरणोच्छ्रायविधि-नामाध्यायः । इति यात्राविधिर्नाम । इति कामप्रादुर्भावपूजनम् । इति कार्य्यारम्भप्रादु-र्भावपूजा नाम । इति श्रीकालनियमपूजा समाप्ता ।

इति तृतीयकाण्डः समाप्तः ॥ * ॥

---

**No. 191.** विष्णुसहस्रनामस्तोत्रम् . ( केशवभट्टकृत-विष्णुनामार्थ-दर्शनाख्य-टीका-सहितम् . ) Substance, country-made paper, 14 × 7. Folia, 32. Lines, 10 on a page. Extent, 1,000 çlokas. Character, Nāgara. Date, Sm. 1936. Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. The text in verse, the comm. in prose. Generally correct.

**Beginning.** श्रीगोपालाय नमः ।
सर्व्वेश्वरं नमस्कृत्य नित्यादित्यश्च भक्तितः ।
संक्षिप्तं क्रियतेऽस्माभिर्विष्णुनामार्थदर्शनम् ॥
विशिष्टः सर्व्वधर्म्मेभ्यः सर्व्वधर्म्मशिरोमणिः ।
सर्व्वदेवेतिहासानां सारोऽर्थोऽयं निगद्यते ॥
वैशम्पायन उवाचेति सूतोक्तिः । इत्यादि ।

**End.** एवंभूतस्य धर्म्मपक्षपातिनः श्रीकृष्णस्य पुनरसाधारणान् गुणानाह सहस्र इति त्रिभिः १३८ । १३९ । १४० । शाकस्याचार्य्येमनुबन्धचतुष्टयं च वदन् शास्त्रमुपसंहरति इममिति १४१ । पुनर्भजनीयं तद्भजनं च भजनफलं च दृढीकरोति विश्वेश्वरमिति । विश्वस्य सर्व्वस्य ईश्वरं सर्व्वेश्वरं १४२ ।

श्रीकेशवपदद्वन्द्वकल्पद्रुमनिवासिना ।
केशवेन कृतं श्रीमद्विष्णुनामार्थदर्शनम् ॥
श्रीनिम्बार्कपदाम्भोजमरन्दोद्भवबुद्धिना ।
उद्धृतः शास्त्रसारोऽयं व्याकरेभ्यः समासतः ॥

Colophon. इति श्रीमत्-काश्मीरिकेशवभट्टविरचितं श्रीमद्विष्णुनामार्थदर्शनं समाप्तम् । श्रीराधावल्लभाय नमः । श्रीकृष्णाय नमः । श्रीरामचन्द्राय नमः । शुभसंवत् १८१६ । ज्येष्ठ । ८ ।

---

**No. 192.** वृन्दावनयमकटीका. By रामकान्तः. Substance, country-made paper, $18 \times 2\frac{1}{2}$ inches. Folia, 8. Lines, 8 on a page. Extent, 375 çlokas. Character, Bengali. Date, Sk. 1734. Place of deposit, District Bariçāla, Mānapāsā, Paṇḍita Govindacandra Çiromaṇi. Appearance, old. Prose. Correct.

Beginning. ॐ नमः श्रीकृष्णाय । इह खलु निर्विघ्नाभिलषितसिद्धिकामः कविरयं अखिल-कविकुल-सम्मत-निखिल-विघ्नध्वंसोद्धारण-कारण-कृष्णनमस्कारकृप-मङ्गलमयतः समारभते वरदायेत्यादि ॥ इत्यादि ।

End. अचिरानां कौद्दशानां लीलाजानां लीलया क्रीड़या जातानामुत्पन्नानाम् । लाजाः पुंभूम्नि चाक्षतमित्यमरः । छाया सूर्यप्रिया कान्तिः प्रतिबिम्ब-मनातप इति च ॥ * ॥

Colophon. इति विश्वकाराद्देवश्रीरामकान्तनिर्म्मिता ।
वृन्दावनयमकाख्यकाव्यटीकासमर्थिता ॥
शाके शक्त्याग्नि-क्षितिधर-मत्तौवत्सरमिते ॥ ० ॥

विषयः । वृन्दावनयमकाख्यस्य नानालङ्कविलसतस्य काव्यस्य व्याख्यानम् ॥

---

**No. 193.** वेदान्ततत्त्वबोधः. Substance, country-made paper, $12\frac{1}{2} \times 6\frac{1}{2}$ inches. Folia, 17. Lines, 14 on a page. Extent, 600 çlokas. Character. Nāgara. Date, ? Place of deposit, Hātuā, Bābu Girindranātha Datta, Appearance, new. Prose. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।

यच्चिन्तितो हरति ध्यानमशेषमन्त-
र्दोषप्रदस्तरविकोटिसमप्रभो यः ।
योऽज्ञानवाड्प्रभवं च्चि ददाव ...
तं श्रीसुदर्शनमहं हृदि चिन्तयामि ॥

किं वेदान्ततत्वमिति प्रश्ने उच्यते । सार्व्व ... नन्तकगुणाब्धिरनन्तशक्ति-र्जगतो जन्माद्यभिन्ननिमित्तोपादानकारणं चेतनाचेतनवस्तुस्वाभाविकभेदा-भेदसंबन्धाश्रयः परब्रह्मपरमात्मपुरुषोत्तमादिशब्दाभिधेयः श्रीकृष्ण एवेति सर्व्ववेदान्तार्थः । इत्यादि ।

**End.** इति भगवतः सर्व्वचावस्थितिरेव सर्व्वभेदव्यपदेशहेतुरित्युक्तं अतो न भेदा-भेदव्यपदेशयोर्विरोध इति प्रतिपादितं एवञ्च केवलभेदे केवलाभेदयोः शास्त्रविरुद्धत्वेन निरस्तत्वाच्चिदचितोर्ब्रह्मणा सह स्वाभाविकभेदाभेदस्यैवाङ्गी-कारो निश्चितो भवति । अन्यथा शास्त्रे संबन्धान्तराभावेन पूर्व्वोक्तैकैक-तराङ्गीकारे तच स्पष्टोक्तदूषणानां सिद्धान्त एवापातादतो नान्यः पक्षः परिग्रहीतुं शक्यते तस्मादस्माभिरपि चिदचिदीश्वराणां स्वाभाविकभेदाभेद-मेव संबन्धमङ्गीकृत्य पुनर्विशिष्टत्वाङ्गीकारे गौरवावहोऽप्यनुपपन्नोऽपि स्वसम्प्र-दायस्य स्वातन्त्र्यसिद्ध्यर्थं इति सिद्धमस्त्विति विस्तरेण ।

**Colophon.** इति श्रीसनत्कुमार-नारदसम्प्रदायप्रवर्त्तकाद्याचार्य्य-श्रीभगवन्नियमानन्दानु-यायिनां वेदान्ततत्वबोधः समाप्तः ॥ शुभमस्तु ॥

**विषयः ।** निम्बार्कमतानुसारेण ब्रह्मणोऽद्वयत्वात्सर्वव्यापकत्वादिनिरूपकवेदान्तस्य मर्म्मो द्घाटनम् ॥ ० ॥

---

**No. 194.** वेदान्ततत्त्वमञ्जरी. By शङ्कराचार्य्यः. Substance, country-made paper, 13 × 1½ inches. Folia, 14. Lines, 6 on a page. Extent, 600 çlokas. Character, Bengali. Date, Sk. 1667. Place of deposit, District Medinipura, Post Office Rādhānagara, grāma Amarapura, Paṇḍita Guruprasanna Vidyāratna. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

अव्यक्तं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

चत्वारः खलु पुरुषार्था धर्मादयः। तत्र चरमः परमपुरुषार्थोऽविनाशित्वात् चयाणां प्रकृतिसाध्यत्वेन विनाशित्वात्। न च मुक्तिः प्रकृतिसाध्या, विवच्छिन्नविवेकेन साध्याया अविद्यानिवृत्तिरूपायास्तस्या ज्ञानैकसाध्यत्वात्। न हि शतशः क्रियमाणेऽपि यत्ने शुद्धिविषयाविद्यायाः शुद्धिविषयकज्ञानमन्तरेण नाशो दृष्टः। मुक्तिसाधनज्ञानन्तु पदार्थज्ञानसाध्यम्। इत्यादि।

**End.** अथ ब्रह्मापि जगदिव न सद्रूपमस्तु अतश्चायातं शून्यवादेनेति चेत् न। यद्वस्तु नास्तीति व्यपदेशेनापि सिध्यति तत् कथमसद्रूपं। न हि प्रकाशमन्तरा नास्तीत्यपि प्रकाशः सम्भवति। अतश्च शून्यवादोऽपि विफलः × × शून्यस्य सद्रूपत्वासद्रूपत्वाभ्यां व्याघातः। आद्ये शून्येति नामधेयमात्रेणायातं नत्वर्थभेदेन। द्वितीये शून्यस्यासिद्धा तन्मताসिद्धिः। अपि च, कल्पनाधिष्ठानस्यासद्रूपमेवाधिष्ठानं वाच्यमिति सिद्धं सदद्वैतवादेनेति संक्षेपः।

**Colophon.** इति परमहंस श्रीशङ्कराचार्य्यकृता वेदान्ततत्वमञ्जरी समाप्ता। श्रीकृष्णाय नमः।
शाके मुनिरसाक्रेन्दुसंख्याते शुचिमासके।
लिखितेयं स्वपाठार्थं वेदान्ततत्वमञ्जरी॥

**विषयः।** पदार्थनिरूपणम्। प्रकृतिनिरूपणम्। मुक्तिनिरूपणम्। प्रातीतिक-व्यावहारिक-पारमार्थिकरूपत्रिविधसत्तानिरूपणञ्च।

---

**No. 195.** वेदान्ततात्पर्य्यनिवेदनम्. By गोविन्दः. Substance, country-made paper, $10 \times 3\frac{1}{2}$ inches. Folia, 83. Lines, 8 on a page. Extent, 1,411 çlokas. Character, Nāgara. Date, Sk. 1710. Place of deposit, Benares City, Paṇḍita Vāmanācāryya Çāstri. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः।
साध्यात्मं सर्व्वकामाप्तिः सार्वज्ञं शुद्धबुद्धता।
यज्ज्ञानायत्तमीशन्तं प्रत्यञ्चं कारणं नुमः॥
गोपालसंचिन्तनवीतदोषः
प्रबोधितः श्रीगुरुलक्षणेन।
वेदान्ततात्पर्य्यनिवेदनेन
स्वबोधशुद्धिं करवाणि सत्पुत्र॥ इत्यादि।

**End.** श्रीमल्लक्ष्मणपण्डितैरधिकृतो वेदान्तविद्यापदे ।
गोविन्दो बुधमौलकण्ठतनयो भोगावलीगर्भजो ।
वेदान्तानुगतं विमत्सरबुधप्रेष्ठं प्रबन्धं व्यधात् ॥

**Colophon.** इति वेदान्ततात्पर्य्यनिवेदनमिदं समाप्तम् ॥ शकाब्दाः १७१० ।

**विषयः ।** अद्वैतमतमाश्रित्य भाष्यतात्पर्य्यवर्णनम् ॥

---

**No. 196.** वेदान्तरत्नमाला. By अनन्तभट्टः. Substance, country-made paper, 10×4½ inches. Folia, 49. Lines, 10 on a page. Extent, 900 çlokas. Character, Nāgara. Date, ? Place of deposit, Hātuā, Pailādeyoyā Maṭha. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीराधासर्व्वेश्वरौ विजयेताम् । श्रीमद्भगवन्निम्बार्काय नमः ।
ब्रह्मादिसेव्यचरणं जगतश्च हेतुं
स्तुत्यं मुनीशविबुधैः स्वजनार्त्तिहारम् ।
कल्याणरूप-गुणमीशमहं भजामि
... ... ... ... ... ॥
आनन्दसंज्ञकमुनिं नियमोक्तिपूर्व्वं
आचार्य्यमाद्यमहमाश्रय ईशचक्रम् ।
पाञ्चजन्यावतारञ्च कृष्णाज्ञापरिपालकम् ।
श्रीश्रीनिवासमाचार्य्यं भाष्यकारं नमाम्यहम् ॥
वेदान्तरत्नमालाख्यो ग्रन्थस्तेषामनुग्रहात् ।
तदुक्तेनैव मार्गेण क्रियते शास्त्रमानतः ॥
प्रत्यक्चैतन्यतत्त्वाचेतनाख्यं ततः परम् ।
परब्रह्मादिसंज्ञञ्च भण्यतेऽस्मिन् समासतः ॥
साधनादिफलञ्चापि तद्विरोधिनिरूपणम् ।
तथाद्यौ चेतना ज्ञेया वैष्णवैः साम्प्रदायिकैः ॥ इत्यादि ।

**End.** वेदान्तगेयं यदिदं जगतश्च हेतुं
तर्काद्यमेयमभिवन्द्यमजादिदेवैः ।
ध्यातो ह्यनन्यशरणैर्निजभावदस्तं
गोपीपतिं हरिमहं शरणं प्रपद्ये ॥

**Colophon.** इति श्रीभगवत्सनत्कुमारसम्प्रदायप्रवर्त्तक-श्रीमद्भगवन्निम्बार्कपादपद्मपरीक्षा-निरतानुगताश्रीहरि-श्रीकेशवभट्टचरणारविन्दानुजेनानन्ताभिधेयेन विरचिता वेदान्तरत्नमाला समाप्ता ॥ ० ॥ श्रीरस्तु । सम्वत् १९११ ।

**विषयः।** निम्बार्कमतानुसारेण प्रत्यक्चैतन्यादिनिरूपणम् । परब्रह्मादिसंज्ञानिरूपणम् । साधनाफलादिकथनम् । साधनाविरोधिनिरूपणम् ।

---

**No. 197.** वेदान्तसंज्ञाप्रक्रिया. Substance, country-made paper, 11½ × 5 inches. Folia, 19. Lines, 8 on a page. Extent, 260 çlokas. Character, Nāgara. Date, ? Place of deposit, Hātuā, Babu Girīndranātha Datta. Appearance, new. Prose. Correct.

**Beginning.** ॐ श्रीगणेशाय नमः ।

ॐ ... ... पादयुगं नत्वा तस्य प्रसादतः ।

वेदान्तसंज्ञाः प्रत्येकं निरूप्यन्ते यथामति ॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ इति वृद्धवचनम् ।

तत्राध्यारोपो नाम वस्तुन्यवस्त्वारोपः अध्यारोपः । वस्तु सच्चिदानन्दात्मकं ब्रह्म । अवस्तु अज्ञानादिसकलजगत्समुदायरूपमशेषप्रपञ्चः । प्रपञ्चद्वयं अज्ञानद्वयं सूक्ष्मशरीरद्वयं स्थूलशरीरद्वयं शक्तिद्वयं निःश्रेयसद्वयं संशयद्वयं असम्भावनाद्वयं विपरीतभावनाद्वयं प्रज्ञाद्वयं ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... शब्दद्वयं रसषट्कं नववर्णाः ऐश्वर्य्यादिषट्कं उत्पत्त्यादिषट्कं नादादित्रयं इत्येताः संज्ञाः । एताः शास्त्रैकदाहृताः प्रत्येकं निरूप्यन्ते । इत्यादि ।

**End.** संहते मलविवरे यत्कण्ठनिनादकरणं स नादः । अनुस्वारो बिन्दुः नादैकदेशः कलेत्यर्थं तथाच संज्ञादितीयब्रह्मप्रतिपादके वेदान्तशास्त्रे वृद्धवचनमनुसृत्याध्यारोपवशात् संज्ञास्सन्तीति प्रतिपादितं । सम्प्रत्यपवादो निरूप्यते अधिष्ठानमात्रपरवशोऽयमपवादस्तथाच सर्वप्रपञ्चरहितं ब्रह्मैवास्तीति प्रत्यगभिन्न-ब्रह्मज्ञानान्मुक्तिरिति सिद्धम् ।

**Colophon.** इति वेदान्तसंज्ञाप्रक्रियाप्रकरणं समाप्तम् ॥

सिद्धान्तमौक्तिकश्रेणीप्रकाशाय प्रदीपिका ।
क्रियते परपक्षीयध्वान्तध्वंसप्रवर्त्तिनी ॥
शिष्टाचारप्राप्तं मङ्गलमाचरन् निरूपणीयं प्रतिजानीते श्रद्दधानेति ।
इत्यादि ।

**End.** मूलञ्च ।
ज्ञातं तेन समस्ततीर्थसलिले स्नातापि दत्तावनि-
र्यज्ञानाञ्च कृतं सहस्रमखिला देवाश्च सम्पूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीज्ञानानन्दपूज्यपादशिष्य प्रकाशा-
नन्दविरचिता सिद्धान्तमुक्तावली समाप्ता ।

टीकायाः । यदज्ञानादिदं भाति यज्ज्ञानाच्च प्रलीयते ।
ब्रह्म + तदहं नित्यं नित्यसच्चित्सुखाद्वयम् ॥
अधिकार्य्युपविशेषमियं सिद्धान्तदीपिका ।
निर्म्मिता राजतां भवत् सदानन्दप्रदायिनी ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीप्रकाशानन्दपूज्यपादशिष्य-श्रीनाना
दीक्षितविरचिता सिद्धान्तमुक्तावलीटीका समाप्ता ।

**विषयः ।** प्रकाशानन्दकृतस्य वेदान्तसिद्धान्तमुक्तावलीग्रन्थस्य व्याख्यानम् ।

---

**No. 199.** वैद्यनाथपूजाविधिः. Substance, country-made paper, 14 × 3½ inches. Folia, 4. Lines, 6 on a page. Extent, 90 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Āḍāihājār, Paṇḍita Candrakānta Vidyālaṇkāra. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमः परमदेवतायै । अथ स्कन्दपुराणोक्त वैद्यनाथपूजाविधिः । तत्र
चतुर्दशीकालेऽस्नाने वा उपवासं कृत्वा सोमवासरे प्रदोषसमये शुक्ल
वाससी परिधाय सायंसन्ध्यामुपास्य पूजामारभेत् । तथाचम्य कृतिपाचमं
कृत्वा सर्व्वपापं संकल्प नवपत्रादिनानादेवताः संपूज्य नान्दीपादे

रक्तचन्दनेनाष्टदलपद्मं निर्म्माय लिङ्गं संस्थाप्य संकल्पं कुर्य्यात् विष्णुरो-
मित्यादि आयुरारोग्यपूर्व्वकचतुर्वर्गफलप्राप्तिकामः सोमवाराधिकरणकप्रदोष
समये पार्थिववैद्यनाथशिवलिङ्गपूजनमहं करिष्ये इति संकल्प्य पीठपूजां
कुर्य्यात् । इत्यादि ।

**End.**

ममास्तु नित्यमानन्दं प्रसादात् तव शङ्कर ।
सर्व्वपापाः क्षयं यान्तु प्रसीद मम शङ्कर ॥
नश्यन्तु दस्यवो राष्ट्रे जनाः सन्तु निरापदः ।
दुर्भिक्षमारीसन्तापाः शमं यान्तु रसातले ॥
सर्व्वशस्यसमृद्धिश्च भूयात् शम्भोः प्रसादतः ।
दुर्गायाश्च चतुर्वर्गप्रदायिन्याः प्रसादतः ॥
इति स्तुत्वा गालवाद्यं कृत्वा संहारमुद्रया ।
पुष्पमानीय चाघ्राय क्षमस्वेति विसर्जयेत् ॥
ततो दक्षिणाच्छिद्रं कृत्वा ब्राह्मणं भोजयित्वा यथाशक्ति हविष्यान्नादिक-
माचरेत् ॥

**Colophon.**

इति स्कन्दपुराणोक्त-वैद्यनाथपूजापद्धतिः समाप्ता ॥
सुवर्णं रजतञ्चैव जपपूजादिकर्म्मसु ।
एष एव कुशः प्रोक्तो न दर्भो वनसम्भवः ॥
ॐ उमासहितवैद्यनाथशिवाय नमः ।

**विषय:** । वैद्यनाथसंज्ञक—पार्थिवलिङ्गस्य पूजाविधानम् ।

---

**No. 200.** **व्याससूत्रवृत्तिः.** By **रघुनाथः.** Substance, country-made paper, 18 × 3 inches. Folia, 68. Lines, 8 on a page. Extent, 3,200 çlokas. Character, Bengali. Date, ? Place of deposit, District Mānabhūma, Post Office Raghunāthapura, Vĕḍogrāma, Paṇḍita Veŋkaṭa Varadācāryya. Appearance, old. Prose. Correct.

**Beginning**

श्रीहरये नमः ।
नित्यं निजानन्दमदद्वितीयं
शुद्धं विभुं सत्यमतिस्खलन्तम् ।
सूक्ष्मं निरस्ताखिलदृश्यदोषं

प्रत्यक्षमात्मानमजं भजामि ॥
शङ्करं शङ्कराचार्य्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥
सत्यज्ञानानन्दात्मकमद्वितीयं ब्रह्मैव शुद्धसत्त्वप्रधानमायोपाधिकं सदीश्वर-
भावं मलिनसत्त्वप्रधानाविद्योपाधिकं जीवभावञ्च जगाम । इत्यादि ।

**End.** नन्वेवं सातिशयत्वादन्तवत्त्वमप्यैश्वर्य्यस्य स्यात्तथा चानावृत्तिबोधकशास्त्रविरो-
धस्तत्राह । अनावृत्तिः शब्दादनावृत्तिः शब्दात् । अर्च्चिरादिमार्गेण ब्रह्मणो-
ऽभ्यागतस्य सातिशयैश्वर्य्यत्वेऽपि नावृत्तिर्भवति । एतेन प्रतिपद्यमाना इमं
मानवमावर्त्तं नावर्त्तन्त इति श्रुतिः । सूत्राभ्यासः शास्त्रसमाप्तिद्योतनार्थः ।
गुरूणां चरणाम्भोजकृपया लिखिता मया ।
वृत्तिः श्रीव्याससूत्राणां प्रीत्यै सास्तु जगद्गुरोः ॥ ० ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रीआनन्दाश्रमचरणारविन्दसेवापरायणेन
रङ्गनाथेन लिखितायां व्याससूत्रवृत्तौ चतुर्थोऽध्यायः समाप्तः ॥ श्रीरामः ।
श्रीमच्छङ्कराचार्य्येण रचिता व्याख्या श्रीमद्रङ्गनाथेन संक्षिप्य लिखिता ॥

**विषयः ।** संक्षेपात् शाङ्करभाष्यानुसारेण व्याससूत्रस्य व्याख्यानम् ।

---

**No. 201.** व्रतकालनिष्कर्षः. By **मधुसूदनवाचस्पति.** Substance, country-made paper, 13 × 3 inches. Folia, 11. Lines, 5 on a page. Extent, 400 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Dhātrigrāma, Paṇḍita Ṣaṣṭhidāsa Bhaṭṭācāryya. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** नमो गणपतये ।
प्रणम्य कारणं कृष्णं ज्ञानानन्दस्वरूपिणम् ।
व्रतादिकालनिष्कर्षं करोति मधुसूदनः ॥
तत्रादौ तिथिनिरूपणम् । इत्यादि ।

**End.** चतुर्थ्यङ्गारवारे च अष्टमी च बृहस्पतौ ।
अत्र यत् क्रियते पापमथवा पुण्यसञ्चयः ॥
षष्टिजन्मसहस्राणि प्रतिजन्म तदक्षयं ॥ इत्यन्यथा

**Colophon.** इति श्रीमधुसूदनवाचस्पतिविरचितं व्रतादिकालनिरूपणं समाप्तम् ॥ ० ॥

**विषयः।** व्रतकालव्यवस्थादिः।

---

**No. 202. व्रतबोधवृत्तिः.** Substance, country-made paper, $15\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 19. Lines, 13 on a page. Extent, 1,000 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Mohanta Bharata Rāmānuja Dāsa. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीरामचन्द्राय नमः।

नत्वा हृदिस्थं जगदेकरूपं रामं परं ब्रह्म विशुद्धबोधम्।

विस्तारशास्त्रश्रवणालसानां बोधाय कुर्व्वे व्रतबोधवृत्तिम्॥

अथ तिथिनिर्णयः। तत्र तिथिर्द्विधा शुद्धा विद्धा च एकस्मिन् दिने तिथ्यन्तरसम्बन्धरहिता शुद्धा तद्विपरीता विद्धा तत्र शुद्धायामसन्देहाद् विद्धा निर्णीयते। तत्र सामान्यतो वेधमाह माधवीये।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्व्वां तथोत्तराम्।

त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥

हेमाद्रिमदनरत्नादौ तु द्विमुहूर्त्तोऽप्युक्तः—

उदिते दैवतं भानौ पैत्र्यं चास्तमिते रवौ।

द्विमुहूर्त्तं त्रि + + सा तिथिर्हव्यकव्ययोरिति॥ इत्यादि।

**End.** एवं प्रकाराच्छिष्टशास्त्रदृष्टिः

कालस्य तत्त्वं गहनं विलोक्य।

संक्षेपतः संव्यवहारमात्रं

यत्किञ्चिदन्यत् परिमार्गणीयम्॥

**Colophon.** इति श्रीव्रतबोधनीसंग्रहे वैष्णवकृते सम्वत्सरकृत्यनिरूपणं नाम पञ्चमः परिच्छेदः॥ समाप्तश्चायं ग्रन्थः। ॐ तत्सत्।

**विषयः।** तिथिनिरूपणम्। व्रतारम्भकालादिनिरूपणम्। अष्टमहाद्वादशीनिरूपणम्। वैशाखादिस्नाने फलकथनम्। रामनवम्यादिव्रतकालनिरूपणम्। मासनिरूपणम्। वैशाखादि-चैत्रान्तमासकृत्यनिरूपणम्।

---

**No. 203.** **शक्तिवादविवृतिः** . By **माधवसिद्धान्तः** . Substance, country-made paper, 18 × 3 inches. Folia, 33. Lines, 8 on a page. Extent, 1,500 çlokas. Character, Bengali. Date, ? Place of deposit, District Barisāla, Post Office Kalasakāṭi, Gădure, Paṇḍita Durgācaraṇa Nyāyaratna. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
आराध्य यां गिरिसुतां वरदां सुधीरै-
र्लब्धं फलं समधिकं प्रथितैरभीष्टात् ।
संसारसागरतरीं भजनैकपात्रीं
दुर्गां नमामि भवभीतिविनाशनाय ।
ख्यातः पूतकुलार्णवेन्दुसदृशो यश्चक्रपाणिः स्वयं
तद्वंश्यो नद्दराजभैरवमहावेगान्यथाकारकः ।
यो राजेन्द्रकृती तदीयकुलजो विख्यातविश्वेश्वर-
स्तत्पुत्रोऽहमिमां करोति विवृतिं श्रीमाधवस्तार्किकः ।
टीकां विज्ञजनप्रमोदजननीं सिद्धान्तसिद्धां शुभां
श्रीमन्माधवनामकेन रचितां यत्नेन धीभिः शुभैः ।
काषायैः परिमृज्य चित्ततरणिं संश्रित्य पारं परं
धीरो गच्छतु सत्पदार्थकुतुकी सत्शक्तिवादार्णवे ॥
शिष्यजिज्ञासया वृत्तिं विभजते सङ्केत इति । अर्थनिष्ठा पदवृत्तिः पदनिरू-
पिता वृत्तिः वृत्तिः शाब्दबोधौपयिकसम्बन्ध इत्यर्थः ॥ इत्यादि ।

**End.** स्वव्याप्तोपस्थितेः स्वानन्तरोत्पन्न हेतुत्वमेव वाच्यमिति तत्र गौरवं स्फुटमेव शक्तिपदस्यैव इति समवायसम्बन्धे गोत्वप्रकारकज्ञानशक्तं पदमित्याकारकं-ज्ञानस्यैवेत्यर्थः । तादृशबोधहेतुत्वात् समवायसम्बन्धेन गोत्वप्रकारकशाब्द-बोधहेतुत्वादित्यर्थः ।

**Colophon.** इति श्रीमन्महामहोपाध्यायमाधवसिद्धान्तभट्टाचार्यविरचिता शक्तिवादटीका समाप्ता ॥ * । ० ।

**विषयः ।** गदाधरभट्टाचार्य्यकृतस्य शक्तिवादाख्यग्रन्थस्य व्याख्यानम् ।

**No. 204.** शतदूषणी. By श्रीनिवासदासः. Substance, country-made paper, 12×6 inches. Folia, 7. Lines, 15 on a page. Extent, 350 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Mohānta Bharata Rāmānuja Dāsa. Appearance, tolerable. Prose. Generally correct.

**Beginning.** श्रीमद्रामचन्द्राय नमः ।
श्रीमल्लक्ष्मणदेशिको गुणनिधि र्वादीभपञ्चाननः
संसारार्णवतारकश्च कृपया स्वाश्रितप्रपन्नान् जनान् ।
सद्विद्यापगजन्मभूमिशिखरी पाषण्डशैलोत्कगु- ?
र्मायावाददवाग्नि रामशरणो वर्वर्त्ति सर्व्वोपरि ॥
श्रीश्रीनिवासदासेन नत्वा श्रीवेङ्कटं गुरुं ।
मायावादनिरासार्थं क्रियते शतदूषणी ॥
स देव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्यत्र आवादिना सजातीयादिभेदशून्यं सन्मात्रमेवासीदिति सिद्धान्तितम् ॥ इत्यादि ।

**End.** अतो ब्रह्मविद्ब्रह्मैवेति श्रुते र्मुक्तस्य ब्रह्मसाम्यएव स्वारस्यमित्यलं दिष्टस्तसुद्गराघातेनेति ॥
एवं सहस्रावधि दूषणानि × + + + + न्यायेनदिङ्मात्र मुक्तं ।
× × × × ईषिकाप्रन्यात् विचार्य्य च पुनः पुनः ।
दूषणानां शतं दत्तं केवलाद्वैतदर्शने ॥

**Colophon.** इति श्रीमन्नारायणचरणमलिनद्विरेफाणां वादीभकेशरिणां श्रीमद्वेङ्कटाचार्य्याणां चरणारविन्दमधुपेन श्रीनिवासदासेन रचिता शतदूषणी समाप्ता ॥

**विषयः ।** मायावादनिरासक शतसंख्याकदोषप्रख्यापनम् ।

---

**No. 205.** शब्दरत्नं (कलापस्य). By श्रीजनार्द्दनशर्म्मा. Substance, country-made paper, 14×3 inches. Folia, 89. Lines, 4 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, Sk. 1726. Place of deposit, District Ḍhākā, Post Office Rāyapurā, grāma Pirijerkā̆di. Paṇḍita Raghunātha Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥
प्रणम्य परमात्मानं श्रीजनार्द्दनशर्म्मणा ।
कलापाब्धेः शब्दरत्नं बालप्रीत्यै प्रकाश्यते ॥

पुंसि ॥ वृत्तः वृत्तौ वृत्ताः । वृत्तं वृत्तौ वृत्तान् । वृत्तेण वृत्ताभ्यां वृत्तैः । वृत्ताय वृत्ताभ्यां वृत्तेभ्यः । वृत्तात् वृत्ताभ्यां वृत्तेभ्यः । वृत्तस्य वृत्तयोः वृत्तानां । अत्ते वृत्तयोः वृत्तेषु । हे वृत्त । एवमकारान्तः पुंसि देवादि-शब्दोऽपि । पुंसि दारशब्दो भूम्नि देववत् । स्त्रियां देवी नदीवत् । इत्यादि ।

**End.** एवमन्यासां । सर्व्वत्रातिक्रान्तवत्प्रोक्तोरपि वाच्यलिङ्गमित्यर्थः ॥ * ॥ * ॥

**Colophon.** इति शब्दरत्ने चतुर्थप्रकरणं समाप्तं ॥ ४ ॥ ४ ॥ श्रीभोलानाथदेवशर्म्मणः स्वाक्षरं पुस्तकञ्च ॥ शुभमस्तु शकाब्दाः १७२६ ॥ श्रीहरिः श्रीगोविन्दः श्रीमाधवः श्रीगुरवे नमः ॐ वाग्देव्यै नमः ॥

**विषयः ।** अस्ति शब्दरत्नं नाम एवंविधं पुस्तकान्तरम् , इदन्तु तस्मादुत्कृष्टम् । सुबन्तानि शब्दान्यत्र साधितरूपाणि विद्यन्ते ।

---

**No. 206. शब्दसाधनं.** By **रामकान्तः.** Substance, foolscap paper, 14 × 4 inches. Folia, 73. Lines, 8 on a page. Extent, 1,800 çlokas Character, Bengali. Date, Sk. 1798. Place of deposit, District Dhaka, Uthuli, Paṇḍita Dinabandhu Gosvāmi. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।

नत्वा भवानीश्वरपादपङ्कजं विज्ञाय दुर्गादिकचन्द्रकृन्मतं ।
बालावबोधाय वितन्यते मया श्रीरामकान्तेन तु शब्दसाधनं ॥
आनन्त्यादेव कार्त्स्न्येन शब्दान् वक्तुं न कोऽप्यलं ।
इत्यत्र कतिचिद्वाच्याः सर्व्वशब्दावबुद्धये ॥
शब्दोऽव्ययोऽनव्ययश्च । लिङ्गसङ्ख्याकारकैर्विभक्तिकृतसंस्कारः साधनम् ।
इत्यादि ।

**End.** इति ऋकारस्य रत्वं एवं मृदुमाचष्टे म्रदित्यादि । अन्येऽपि शिष्टप्रयोगानुसारादूहनीयाः । दिङ्मात्रमेतदुक्तं शब्दानामनन्तत्वात् ।

**Colophon.** इति शब्दसाधनं समाप्तम् ॥ शक १७९८ ॥

**विषयः ।** कातन्त्रव्याकरणानुसारेण नानाविधशब्दानां साधनम् ।

---

**No. 207.** शरभपूजापद्धतिः. Substance, country-made paper, 11 x 7 inches. Folia, 9. Lines, 12 on a page. Extent, 325 çlokas. Character, Nagara. Date, ? Place of deposit, Mahārāja's Library, Hātuā. Appearance, fresh. Prose. Generally correct.

**Beginning.** ॐ श्रीगणेशाय नमः ।
अथ शरभमन्त्रः ।
ॐ देवदेव महाभाग गिरीश गिरिजापते ।
पाहि मां दयया नाथ सच्चिदानन्द शाश्वत ॥ इत्यादि ।

**End.** भर्गेन्दुकेवलवयौ हतषष्ठस्वराश्वितौ ।
कालयुग्मं समालिख्य वह्नीन्दुजाये कचत्वारिंशदक्षरो मनुरिति ॥

**Colophon.** इति श्री आकाशभैरवतन्त्रे उमामहेश्वरसम्वादे शरभपक्षिराजनित्यपूजा पद्धतिः समाप्ता ॥

**विषयः ।** शरभपक्षिराजस्य पूजाप्रकारादिकथनम् ।

---

**No. 208.** शरभेशकवचम्. Substance, country-made paper, 11 x 7 inches. Folia, 5. Lines, 12 on a page. Extent, 200 çlokas. Character, Nagara. Date, ? Place of deposit, Mahārāja's Library, Hātuā. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।
ईश्वर उवाच ।
वक्ष्यामि शृणु देवेशि सर्व्वरक्षणमुत्तमम् । इत्यादि ।

**End.** प्रायश्चित्तं शिव नव नामाक्षरद्वयोच्चरितं ।

**Colophon.** इति श्री आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसम्वादे शरभेश कवचं समाप्तम् ।

**विषयः ।** शरभेशकवचम् यत्‌भूतप्रेतादिभ्यो भीतिनिवारणाय भियते ।

---

**No 209.** **शालग्रामलक्षणम् वा शिलामाहात्म्यम्.** Substance, country-made paper, 13 × 4 inches. Folia, 3. Lines, 7 on a page. Extent, 150 çlokas. Character, Bengali. Date, Sk. 1662. Place of deposit, District Dhākā, Post Office Rūpagañja, grāma Naora, Paṇḍita Çivacandra Bhaṭṭācāryya. Appearance, old. Verse Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
द्वारदेशे समे चक्रे दृश्येते यस्य शोभने ।
वासुदेवः स विज्ञेयः शुक्लाभः सर्व्वकामदः ॥ १ ॥
प्रद्युम्नः सूक्ष्मचक्रन्तु नीलजीतसमन्वितः । (?)
शुशिरच्छिद्रं वर्त्तुलं दीर्घचक्रन्तु तद्भवेत् ॥ २ ॥
द्वे चक्रे एकलग्ने तु पूर्व्वभागे तु पुष्कलं ।
सङ्कर्षणः स विज्ञेयो रक्ताभश्चातिशोभनः ॥ ३ ॥ इत्यादि ।

**End.** कृष्णस्य स्निग्धवर्णस्य पृष्ठे चक्रं सुशोभनं ।
शिवदस्तु स विज्ञेयो महासम्पत्फलप्रदः ॥ ३३ ॥
पीताम्बरः स विज्ञेय ऊर्द्धरेखा तथाम्बुजः ।
पीताम्बरद्वारदेशो रेखात्रयविभूषितः ॥ ३४ ॥
विष्णुना कथितं सम्यक् शिलामाहात्म्यमुत्तमम् ।
अष्टादशपुराणेभ्यो मन्वादिधर्म्मशास्त्रतः ॥
सांख्ययोगात् समाकृष्य वेदवेदाङ्गसम्मतं ।
एतत्ते तु समाख्यातं ब्रह्मन् सत्यः समागतः ॥
यः पठेत् प्रयतो नित्यं शिलामाहात्म्यमुत्तमं ।
महापापानि सर्व्वाणि कृत्वा कर्म्म निरन्तरम् ॥
ऐश्वर्य्यं विलयं यान्ति शालग्रामशिलार्च्चनात् ।
अचलां श्रियमाप्नोति चिरायुर्विगतज्वरः ॥
अक्षयं लभते पुण्यं विमुक्तः पापराशिभिः ।
यत् कृत्वा मुनयः सर्व्वे शालग्रामशिलार्च्चनम् ॥
सर्व्वे ते मोक्षमापन्ना विष्णुलोकं गताः सुखम् ॥

**Colophon.** इति शालग्रामलक्षणं समाप्तं ॥ ० ॥ शकाब्दाः १६६२ ।
श्रीरुद्रमणिदेवशर्म्मणः स्वाक्षरमिदं स्वकीयपुस्तकञ्चेति ॥
यथा दृष्टं तथा लिखितं लेखके नास्ति दूषणम् ॥ ० ॥

विषयः । वासुदेवादिचतुस्त्रिंशत्प्रकार-शालग्रामशिलालक्षणम् । अष्टादशपुराण मन्वादि-प्रणीतधर्म्मशास्त्रेभ्यः साङ्ख्ययोगाच्च समाकृष्य प्रथममेतच्छिलामाहात्म्यं भगवता विष्णुना कथित-मासीत् । अनन्तरं वेदवेदाङ्गसम्मतमेनं कोऽपि कश्चिद्ब्राह्मणं कथयामास ।

---

**No. 210.** शास्त्रप्रकाशिका (सुरेश्वरवार्त्तिकटीका) (समूला) By भगवदानन्दः. Substance, country-made paper, 13½ × 7 inches. Folia, 1,616 Lines, 15 on a page. Extent, 65,000 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose and verse. Correct.

**Beginning.** ॐ श्रीगणेशाय नमः । श्रीगुरुभ्यो नमः ।

ॐ स्वाज्ञानोद्भूतभेदप्रमुखबहुसुखद्वैतदेहद्वयो ×
मात्मत्वादिप्रपञ्चप्रचयपरिचयप्राप्तसंसारपाचम् ।
नित्याभ्यासप्रसूतप्रबलमतिबलप्राप्तमोहप्रभाव-
प्रोत्यप्रत्यर्थिसार्थच्युतिकथमकथं धाम कामं प्रपद्ये ॥ (?)
मातर्नतोऽस्मि भवतीमथचार्थये त्वां
चेतः सरस्वति सुरेश्वरवार्त्तिके मे ।
वाचा सहैव मदनुप्रहसंप्रमत्त
मेकाग्रमस्तु परिहाय पराङ्मुखमर्थम् ॥
श्रीमद्धामपयोनिधिर्निधिरसौ सत्सूक्तिपङ्क्तिस्फुरन्-
मुक्तानामनवद्यहृद्यविपुलप्रद्योतसिद्धामुनिः ।
शान्तिः चान्तिष्टतो दयेति सरितामेकान्तविश्रान्तिभू
र्भूयान्नः सततं मुनीन्द्रमकरश्रेण्याश्रयः श्रेयसे ॥
सम्प्रदायविदामुक्तीरनुसृत्य प्रणीयते ,
शास्त्रप्रकाशिका सेयं सुरेश्वरवचोऽनुगा ।
इह खलु निखिलाम्नायार्थपरिशोधनार्थं काण्वोपनिषद्भाष्यं व्याचिकीर्षु-राचार्य्यश्चिकीर्षितपरिसमाप्त्यादिपरिपन्थिदुरितनिर्वहणसिद्धये शिष्टाचार-प्रमाणकमिष्टदेवताप्रणतिलक्षणं मङ्गलाचरणं × × × समाचरन्नर्थं + + व्याचिख्यासितभाष्यार्थसुखप्रतिपत्त्यर्थं संक्षिपति । स्वाविद्येत्यादिना । इत्यादि ।

**मूलस्य प्रारम्भवाक्य।** ॐ नमः श्रीदुण्ढिराजाय।

स्वाविद्याविभवप्रसूतविपुलद्वैतप्रपञ्चाश्रित
स्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते।
निर्भागं सकलाभिधानमननव्यापारदूरस्थितं
वन्दे नन्दितविश्वमव्ययमजं भक्त्या तमेकं विभुम् ॥ इत्यादि।

End. **टीकायाः।**

श्रीतत्त्वार्थविचारनीरनिवहो नीता न योगी इह
श्लोकग्रन्थिमहाग्रहस्फुटनरव्यापाररत्नाकरः।
प्रत्यग्बोधमुदा विभूतिविभवप्रौढ़ा मुमुक्षैकभूः
सोऽयं वार्त्तिकवारिधिर्विजयते वस्यन्त (?) चूड़ामणिः ॥
विहिता निहिता सेयं सुरेश्वरवचोऽनुगा।
शास्त्रप्रकाशिकाऽस्माभिरर्पिता पुरुषोत्तमम् ॥
इति वार्त्तिकपीयूषसुरसास्वादनेच्छवः।
शास्त्रप्रकाशिकाव्याख्याममृत्पादं मुमुक्षवः ॥

Colophon. इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमच्छुद्धानन्दपूज्यपादशिष्य—श्रीमद्भगवदानन्दकृतायां सुरेश्वरवार्त्तिकटीकायां शास्त्रप्रकाशिकायामष्टमोऽध्यायः ॥ समाप्तोऽयं सर्व्ववार्त्तिकग्रन्थः ॥

End. **मूलस्य।** आशैलादुदयात् तथास्तगिरितो भास्वद्यशोरश्मिभि-
र्व्याप्तं विश्वमनन्धकारमभवद् यस्य + शिष्यैरिदं।
आरा + न गभस्तिभिः प्रतिहतश्चन्द्रायते भास्कर-
स्तस्मै शङ्करभानवे तनुमनोवाग्भि र्नमः स्तात् सदा।

Colophon. इति श्रीद्वादशमात्रश्रीवार्त्तिकामृतमीरितं।
काण्वारण्यकभाष्यस्य शाङ्करस्य समासतः ॥
अष्टमाध्यायवार्त्तिकं समाप्तम्।

**विषयः।** काण्वशाखीयोपनिषदां शाङ्करभाष्यस्य सुरेश्वराचार्य्यकृतं यद्वार्त्तिकं तस्य टीकेयम् अष्टाध्यायात्मकोऽयमतिवृहद्ग्रन्थः ॥

**No 211.** **शिवगीताटीका (समूला)**. By **कलदिवेङ्कटाद्रिनायकः**. Substance, country-made paper, $11\frac{1}{2} \times 6\frac{1}{2}$ inches. Folia, 130. Lines, 12 on a page. Extent, 2,200 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Prose and verse. Correct.

**Beginning.** ॐ शुद्धाद्वैतसमर्थने पटुमते यस्य प्रतापं महत्
श्रुत्वाप्यैक्यमचिं (?) सदा विदधते त्यक्तोषणाभेदकः ।
यद्द्रव्येषु गणेषु कर्म्मसु तथा जातौ विशेषेषु च
प्रौढाद्भुतयोद्यतैः सह नित्यं सम्बन्धमदाश्यत ॥ (?)
यत्कीर्त्तिं श्रवणातिथिं कृतवतः कल्पद्रुमस्याभवत्
कम्पः स्तम्भभरस्तथा समभवत् शेषस्य गां बिभ्रतः ।
शक्रस्याक्षिमिषात् समस्तदिविषत्सौभाग्यलोपावहो
वक्षश्छिद्रभरः परस्य मिषतो दारानकामानपि ॥
यत्कीर्त्तिं कलहंसकुन्दधवलां श्रुत्वा महेन्द्रादयो
ऽवज्ञामात्मनि सन्ततं विदधते लज्जाभरैर्मन्यराः ।
श्रुत्वा देवगुरोर्मनोममना यद्वैखरी जायते
सोऽयं × कदलीशवेङ्कटविभु र्वर्वर्त्ति सर्व्वोपरि ॥
सोऽयं पद्मपुराणस्य षोडशाध्यायनिर्म्मिताम् ।
शिवगीतां शिवप्रीत्या विवेचयति सादरम् । सूत उवाचेत्यादि ।

**End.** अस्यायमाशयः यद्यपि बहिरेव मन्थ्यावयं प्रशस्तं तथापि यदा विवरणा-
धारलोपप्रसक्तिः तदा श्रौतस्य विवरणस्य प्राबल्यात् तदनुरोधेन द्वे सन्ध्ये
गृहेऽप्यनुष्ठेये इति स्फुटमिदं माधवादिग्रन्थेष्वितिदिक् ।

**Colophon.** इति शिवगीतासूपनिषत्सु शुद्धाद्वैतसिद्धान्तप्रतिष्ठापनैकधुरन्धरिककलदि-
वेङ्कटाद्रिनायकविरचितायां शिवगीताव्याख्यायां षोडशोध्यायः ।
इति शिवगीताटीका सम्पूर्णा ।

**विषयः ।** पद्मपुराणीय शिवगीताया व्याख्यानम् ।

---

**No. 212.** **शिवतत्वसुधानिधिः**. Substance, country-made paper, $11 \times 5$ inches. Folia, 104. Lines, 7 on a page. Extent, 1,800 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Verse. Generally correct.

**Beginning.** श्रीस्कन्दपुराणान्तर्गतशिवतत्वसुधानिधिप्रारम्भः । अध्यायसंख्या २० । ग्रन्थसंख्या १५०० । श्लोकसंख्या १८०० । पंचसंख्या १२७ ॥ ॐ ढुण्ढिराजान्नपूर्णाम्बादिसमस्तपरिवारसमेतं श्रीकाशीविश्वनाथं सगुरुचरणारविन्दाभ्यां नमोनमः ।

शङ्करेन्द्रगुरुं नत्वा शैवेन्द्रं शिवरूपिणं ।
लिख्यामीश्वरतुष्ट्यर्थं शिवतत्वसुधानिधिं ॥
यं प्रणम्य सुरेन्द्राद्या भवन्ति सुखशालिनः ।
सर्व्वविघ्नोपशान्त्यर्थं तं वन्दे शङ्करात्मजं ॥
श्रीसूत उवाच ।
शिवं हरिं विधातारं तत्पत्नीस्तत्सुतान् गुरून् ।
नत्वा समस्तप्रत्यूहशान्त्यै मङ्गलाय च ॥
वर्णे शृणुध्वं सर्व्वज्ञाः शिवतत्वसुधानिधिं ।
नैमीषीयास्तु मुनयः शौनकाद्या महर्षयः ॥
सत्रावसाने संहृष्टाः सूतं पप्रच्छुरादरात् ॥ इत्यादि ।

**End.** एतत् पुण्य समाख्यानं श्रावयेद्वा शृणोति वा ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनं ॥
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।
सर्व्वान् कामानवाप्नोति सत्यमेतन्न संशयः ॥ ॐ तत्सत्

**Colophon.** इति श्रीमत्स्कान्दे महापुराणे सनत्कुमारसंहितायां अन्तिमखण्डे शिवतत्वसुधानिधौ सूतऋषिसम्वादे सकलाध्यायमहिमानुवर्णनं नाम विंशोऽध्यायः । अन्तिमखण्डस्य पूर्व्वभागः समाप्तः ॥

**विषयः ।** श्रीस्कान्दे महापुराणे सनत्कुमारसंहितायां शिवतत्वसुधानिधौ प्रथमोऽध्यायः । सनत्कुमारप्रश्नवर्णनं नाम २ अः । शिवतत्वनिरूपणं नाम ३ अः । मायानिरूपणं नाम ४ अः । जगच्चैतन्यनिरूपणं नाम ५ अः । पञ्चकोशाख्यदुर्गाभरणं नाम ६ अः । जीवन्मुक्तिस्वरूपवर्णनं नाम ७ अः । विदेहकैवल्यस्वरूपवर्णनं नाम ८ अः । स्कन्दसनत्कुमारसंवादे महावाक्यविवरणं नाम ९ अः । षण्मुखसनत्कुमारसंवादे शिवानन्दानुभवो नाम १० अः । षण्मुखसनत्कुमारसंवादे संसारदूषणं नाम ११ अः । षण्मुखसनत्कुमारसंवादे सगुणध्यानयोगनिरूपणं नाम १२ अः । स्कन्दसनत्कुमारसंवादे १३ अः । स्कन्दसनत्कुमारसंवादे शिवार्च्चनभस्ममहिमानुवर्णनं नाम १४ अः । कार्त्तिकेयसनत्कुमारसंवादे रुद्राक्ष विल्वपत्र रुद्राध्याय महिमानुवर्णनं नाम

१५ षः। भिचाटनवर्णनं नाम १६ षः। महालिङ्गप्रादुर्भावो नाम १७ षः। सुब्रह्मण्यसनत्कुमारसंवादे शिवनामस्मरणदर्शनमहिमानुवर्णनं नाम १८ षः। शिवपूजा-शिवस्तुति महिमानुवर्णनं नाम १९ षः। श्रीस्कान्दे महापुराणे सनत्कुमारसंहितायां षन्तिमखण्डे शिवतत्त्वसुधानिधौ सूतऋषिसंवादे सकलाध्यायमहिमानुवर्णनं नाम विंशोऽध्यायः।

---

**No. 213. शिवरहस्यम्.** Substance, country-made paper, 12 × 5 inches. Folia, 46. Lines, 13 on a page. Extent, 1,256 çlokas. Character, Nagara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः।

विघ्नाद्रिभङ्गकुलिशाहतिचारुशुण्ड-
दन्ताग्रधारि + + + द्विरदेन्द्रवक्त्रं।
कर्णान्तराललसितराजितचामरौघ-
संवीजनप्रहृतदानकटं नमामि॥

सूत उवाच। इत्यादि।

× × × × ×

**End.** त्यक्त्वा मानुषमधुवं जनवरो(?) यात्येव शम्भोः पदं।
नारायणसहोदरा पतिहता पादारविन्दार्चन—
द्वारा तुष्टहृदन्तरं पुरहरं विश्वेश्वरं शङ्करं॥

**Colophon.** इति श्रीशिवरहस्ये एकादशांशे भक्तिमहिमा नाम पञ्चाशोऽध्यायः। भाद्रपद शुक्लतृतीया रविवारे लेखनं समाप्तं। राक्षसनामसम्वत्सरे॥ *।

**विषयः।** शिवस्य माहात्म्यादिवर्णनम्।

---

**No. 214. शिवसंहिता.** Substance, foolscap paper, 10 × 3 inches. Folia, 24. Lines, 8 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, District Rājasāhi, Post Office Pākuḍe Keḍogrāma, Paṇḍita Kālidāsa Ṭhākura. Appearance, fresh. Verse. Generally correct.

**Beginning.** ॐ तत् सत् अथ शिवसंहिता।
एकं ज्ञानं नित्यमाद्यन्तशून्यं।
नान्यत् किञ्चित् वर्त्तते वस्तु सत्यं। इत्यादि।

**End.** गेहे स्थित्वा पुत्रदारादिपूर्णः
सङ्गं त्यक्त्वा चान्तरे योगमार्गे ।
सिद्धेश्चिह्नं वीक्ष्य पश्चात् गृहस्थः
क्रीड़ेत् सो वै सम्मतं साधयित्वा ॥

**Colophon.** इतीश्वरविरचितायां शिवसंहिता समाप्ता ॥ * ॥

**विषयः।** प्रथमपटले योगशास्त्रकथनमुखेन लयप्रकारकथनम् । २ ये ज्ञानोपदेशः । ३ ये योगाभ्यासतत्त्वकथनम् । ४ र्थे मुद्राकथनम् । ५ मे साधकलक्षण-प्रतीकोपासनादि-निरूपणञ्च

---

**No 215.** शिवसहस्रनामस्तोत्रम् (रुद्रयामलीयम्). Substance, country-made paper, 15 × 3 inches. Folia, 10. Lines, 6 on a page. Extent, 200 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Demḍā Bārapāḍā, Paṇḍita Ādinātha Tarkabhūṣaṇa. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय । ॐ महादेवाय नमः ।
श्रीपार्व्वत्युवाच ।
केनोपायेन देवेश सर्व्वदा त्वं प्रसीदसि ।
वाञ्छितां सिद्धिमाप्नोति नरो यस्य प्रसादतः ॥
तन्मे कथय देवेश यदि मे विद्यते दया ॥
श्रीशिव उवाच ।
शृणु पार्व्वति वक्ष्यामि मन्त्राणां हितकाम्यया ।
महास्तोत्रं महापुण्यं मम वक्त्रविनिर्गतम् ॥
सहस्रनामस्तोत्रं मे दुर्लभं दैवतैरपि ।
विना पूजां विना ध्यानं विनाचारं विना जपम् ॥
लभते येन कल्याणं तन्मे निगदितं शृणु ॥ इत्यादि ।

**End.** स्तोत्रं सहस्रनामाख्यं मम वक्त्रविनिर्गतं ।
गोपितव्यं त्वया भद्रे स्वयोनिरिव चापरे ॥
स्तोत्रं नाम समन्ततं प्रतिदिनं भक्त्या पठेन्मानवः
स स्याद्भूपतिसन्निभो वशवता देवी स्वयं यक्षराट् । (?)

सौन्दर्य्येन च मूर्त्तिमान् मनसिज ... ... क्षाणोपमः
शक्त्या मत्सदृशो जवे पवनजस्त्वाम्भ लभेच्छङ्करम् ॥

**Colophon.** इति रुद्रयामले चरमौरीसम्वादे शिवसहस्रनामस्तोत्रं समाप्तम् ॥

**विषयः।** भगवतः शङ्करस्य सहस्रनामकथनम् ।

---

**No. 216. शिवसूत्रविमर्शिनी.** By **श्रीक्षेमराजः.** Substance, country-made paper, $9\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 14. Lines, 6 on a page. Extent, 600 çlokas. Character, Nāgara. Date, ? Place of deposit, Hatuā Mahārājā's Library. Appearance, new. Prose and verse. Incorrect.

**Beginning.** ॐ नमः शिवाय । ॐ गणाधिपतये । ॐ नमः ।
ॐ यद्रः क्षेत्रज्ञवर्गः समुदयति यतो यत्र विश्रान्तिमृच्छेद्
यत्र त्वं यस्य विश्वस्फुरितमयमियद्युन्मयं विश्वमेतत् ।
स्वाच्छन्द्यानन्दद्वन्द्वं कलममृतमयानुत्तरस्यन्दतत्त्वं
चैतन्यं शाङ्करं तद् जयति यदखिलं द्वैतभासादयात्म ॥
चासमं अथमालोक्य इत्तीनामिह तत्वतः ।
शिवसूत्रं व्याकरोमि गुर्व्वाम्नायविचारतः ॥

**End** तरत तरसा संसाराब्धिं विशन्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवप्रोक्तं सूत्रं रहस्यसमुज्ज्वलं
प्रसभविलसत् + + + समुत्प्लवदायि तत् ॥

**Colophon** इति श्रीशिवसूत्रविमर्शिनी समाप्ता ॥ कृतिर्महामाहेश्वरराजानक-श्रीमदभि-
नवगुप्तपादपद्मोपजीविनो राजानकश्रीक्षेमराजस्येति शिवम् ॥ श्रीभास्करो
जयति । ॐ ।
श्रीगोविन्दपदारविन्दमकरन्दास्वादशुद्धाशयाः
संसाराम्बुधिमुत्तरन्ति सहसा पश्यन्ति पूर्णं महः ।
वेदान्तैरवधारयन्ति परमं श्रेयस्त्यजन्ति भ्रमं
द्वैतं स्वप्नसमं विदन्ति विमलां विन्दन्ति चानन्दताम् ॥ ॐ रामः ॐ ।

**विषयः।** शिवसूत्रस्य व्याख्यानम् ।

---

**No 217.** शिवाद्वैततरङ्गिणी. By महादेवतीर्थः. Substance, country-made paper, 12×4 inches. Folia, 191. Lines, 8 on a page. Extent, 4,000 çlokas. Character, Bengali. Date, ? Place of deposit, Royāil, District Dhākā, Bābu Yogīndramohana Rāya. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।
नत्वा गुरुपदद्वन्द्वं ब्रह्माद्यैरपि पूजितम् ।
संग्रह्यते मया यत्नात् शिवाद्वैततरङ्गिणी ॥
नानापुराणादाहृत्य स्वचित्तपरिशुद्धये ।
शिवविष्ण्वाद्यभेदोऽत्र चिन्त्यते शास्त्रसम्मतः ॥
तत्रादावादित्यपुराणे ॐ
शुद्धस्फटिकसङ्काशं देवं निष्कलमक्षरम् ।
कारणं सर्व्वलोकानां सर्व्वलोकमयं परम् ॥ इत्यादि ॥

**End.** मायानिरसनात् सद्यो नश्यते च गुणत्रयम् ।
यदा गुणत्रयातीतो भवतीति स मुक्तिभाक् ॥
तस्माल्लिङ्गार्च्चनं भाव्यं सर्व्वेषामिव देहिनाम् ।
लिङ्गरूपी शिवो भूत्वा त्रायते सचराचरम् ॥
पुरा भवद्भिः पृष्टोऽहं लिङ्गरूपी कथं शिवः ।
तत्सर्व्वं कथितं विप्रा याथातथ्येन सम्प्रति ॥ * ।

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्य-श्रील-श्रीमहादेवतीर्थस्वामिना विरचितायां श्रीशिवद्वैततरङ्गिण्यां नवमस्तरङ्गः समाप्तः ॥ श्रीश्रीहरिः ॥ * ।

**विषयः।** । १ म २ य तरङ्गयोः शिवपूजाविधिः । शिवपूजामाहात्म्यादिकथनम् । हरिहरादीनामभेदकथनम् । शिवलिङ्गपूजनविध्यादिः । शिवस्य मानसिकस्नानादिकथनञ्च । ३ ये तरङ्गे ईश्वरगीता योगशास्त्रादिञ्च । ४ र्थे तरङ्गे शिवपूजाया नित्यत्वादिकथनम् । निर्माल्यग्रहणविध्यादिञ्च । ५ मे तरङ्गे देव्या अद्वैतादिकथनम् । दुर्गापूजामाहात्म्यादिकथनञ्च । ६ ष्ठे तरङ्गे मोक्षप्राधान्यादिकथनम् । ७ मे तरङ्गे मोक्षस्वरूपादिनिरूपणम् । ८ मे तरङ्गे गङ्गामाहात्म्यादिकथनम् । ९ मे तरङ्गे शिवस्य माहात्म्यादिकथनम् ।

---

**No 218.** शुद्धिकारिका. By नारायणवन्द्योपाध्यायः. Substance, country-made paper, 14×3 inches. Folia, 18. Lines, 7 on a page. Extent, 350 çlokas. Character, Bengali. Date, Sk. 1774. Place of deposit, District Hugli, Kṛṣṇanagara, Paṇḍita Dharmmadāsa Çiromaṇi. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीरामः ।

सर्व्वस्वरूपं श्रीरामं प्रणम्य भक्तवत्सलं ।
समुद्रे शुद्धितत्त्वस्य कश्चित् करोति कारिकाम् ॥
शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रस्तु त्रिंशता दिनैः ॥
सजात्युक्ताशौचमेतत् पूर्णाशौचञ्च कथ्यते ।
खण्डाशौचमतो न्यूनं न खण्डे खण्डमिष्यते ॥

अथ शौचाशौचयोर्लक्षणम् ।

शौचाभावो नचाशौचं वैपरीत्यं नवा तयोः ।
यौगपद्यविरोधाच्च घटतत्प्रागयोर्यथा ॥
तस्मात् संस्काररूपत्वं धर्म्माधर्म्मवदिष्यते ।
अशौचं विहिते कार्य्येऽनर्हताप्रतिपादकम् ॥
शुद्धिस्तु तादृशे कार्य्ये योग्यताप्रतिपादिका ॥ इत्यादि ।

**End.** अथ पुष्करयोगः ।

पुनर्व्वसूत्तराषाढा कृत्तिकोत्तरफल्गुनी ।
पूर्वभाद्रं विशाखा च रविभौमशनैश्चराः ॥
द्वितीया सप्तमी चैव द्वादशी तिथिरेव च ।
एतेषामेकदा योगे भवतीति त्रिपुष्करः ॥

\+ + + + + + + +

अन्यत्र पूजाहोमकर्म्मणी करिष्ये इति विशेषः ।
इति सर्वमशौचेऽपि कर्त्तव्यं । यथा दक्षः —
शुद्धकालेत्विदं सर्व्वं सूतकं परिकीर्त्तितं ।
आपद्यातस्य सर्वस्य सूतकेऽपि न सूतकम् ॥
गयायां सर्वकालन्तु पिण्डं दद्याद्विचक्षणः ॥
इति वचनात् प्रेतपदोल्लेखेन प्रेतस्य गयायां पिण्डदानं कुर्य्यात् । यस्य सपिण्डीकरणान्तं प्रेतश्राद्धं न कृतं तस्य वर्षात् परं तर्पणं न कार्य्यं एकादश्यादौ चेत् श्राद्धं क्रियते प्रेतपदोल्लेखेनेति भद्रम् ।

**Colophon.** इति श्रीनारायणवन्द्योपाध्यायविरचिता शुद्धिकारिका समाप्ता ॥ ॐ नमो नारायणाय ॐ रामः । शकाब्दाः १७०४ । श्रीमधुसूदनवन्द्योपाध्यायस्य स्वाक्षरमिदम् ॥

**विषय:** । शौचाशौचयोर्लक्षणम् । स्पृश्यशौचनिरूपणम् । सपिण्डाद्यशौचनिरूपणम् । विदेशस्थाशौचनिरूपणम् । अथाग्न्यस्पृश्यत्वाचारत्वपाशित्वाशौचसङ्करसहगमनाशौचाद्यादिव्यवस्थाकथनम् । प्रेतक्रियाद्यधिकारिनिरूपणम् । पुष्करादियोगादिनिरूपणञ्च ॥

---

**No. 219.** शुद्धितत्त्वकारिका. By रामभद्रन्यायालङ्कारः. Substance, country-made paper, 17 × 3 inches. Folia, 11. Lines, 6 on a page. Extent, 250 çlokas. Character, Bengali. Date, Sk. 1714. Place of deposit, District Huglī, Mollāigrāma, Paṇḍita Gopālacandra Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
सर्व्वस्वरूपं श्रीरामं प्रणम्य भक्तवत्सलम् ।
कारिकां शुद्धितत्त्वस्य वितनोति यथामति ॥
शुध्येद्विप्रो दशाहेन इत्यादि ।

**End.** किन्तु एकादशाहादौ चेत् श्राद्धं क्रियते तदा प्रेतपदोल्लेखेन इति शिवं ॥

**Colophon.** इति श्रीरामभद्रन्यायालङ्कारविरचिता शुद्धितत्त्वकारिका समाप्ता ॥ * ॥
शकाब्दाः १७१४ ॥

**विषय:** । ब्राह्मणक्षत्रियादीनामशौचव्यवस्थादिकथनम् ।

---

**No. 220.** शुद्धिप्रकाशः. By श्रीकृष्णशर्म्मचक्रवर्त्ती. Substance, country-made paper, $20\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 26. Lines, 7 on a page. Extent, 600 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Kāligañja, grāma Dakṣiṇabhāga, Paṇḍita Rakṣākara Nyāyapañcānana. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥
श्रीकोडरायवचनादतियत्नतोऽयम् ।
ज्ञात्वा मतं विविधतन्त्रकृतां मुनीनाम् ॥
श्रीकृष्णशर्म्मकृतिभिः क्रियते प्रकाशः ।
शुद्धेः शिशोर्झटिति बोधि इति क्षमध्वम् ॥
अथ निर्गुणाशौचनिर्णयः ॥ तत्र कूर्म्मपुराणे ।
दशाहं प्राहुराशौचं सपिण्डेषु विपश्चितः ।
मृतेषु वाथ जातेषु ब्राह्मणानां द्विजोत्तमाः ॥

यथा मनुः । शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥
ब्रह्मपुराणे । शौचाशौचं प्रकुर्व्वीरन् शूद्रवद्वर्णसङ्कराः । वर्णसङ्करा अपकृष्ट-वर्णेन उत्कृष्टवर्णस्त्रीषु जाता इति श्रीधरः । एतेन जननमरणाशौचे ब्राह्मणानां दशाहेन शौचं शूद्राणां मासाशौचं वर्णसङ्कराणामपि मासा-शौचं बोद्धव्यं ॥ शुद्धिस्तावद्‌विहितविहितधर्म्माधिकारोपपादको धर्म्मविशेषः । अशुद्धिस्तु तद्विरोधी धर्म्मविशेषः । सपिण्डजन्मादिनिमित्तक इति श्रीधरः । तत्र महापातकादौ मृतादिजन्याशौचे चातिव्याप्तिः । तत्र उभयसाधा-रणाशौचलक्षणन्तु स्वनिमित्तव्यधिकरणत्वे सति सन्ध्याद्युपयोगविरोधिधर्म्मत्व मिति गुरवः । निमित्तव्यधिकरणत्वं निमित्तसम्बन्धिशरीरान्यशरीरावच्छिन्ना-धिकरणत्वमिति । अतो न पातकिस्पर्शजन्यसंस्कारनिमित्ताधिकरणशरीरा-नधिकरणऽतिव्याप्तिः । नापि महापातके मृते चातिव्याप्तिरिति । इत्यादि ॥

End. ननु सूतकान्तादित्यत्र सूतकीनामशौचानामन्तो दिवस इति वा सूतक-स्यान्तो विनाशो यस्मादिति वा सूतकस्यान्तो वा यस्मिन्नित्यर्थः । आद्ये सूतकप्रथमदिनाप्रसिद्ध्यान्तत्वात् निरूपणात् सद्यः शौचदिनासंग्रहः । द्वितीयेऽपि तथा सद्यःशौचे तद्दिन एवाशौचनाशोत्पत्तिः न तत्परदिने । यतस्तृतीये दशमदिनाद्यसंग्रहः । सद्यःशौचेऽपि तद्दिन एव चौरादितत्कर्म-विधावव्याप्तिः । न चैवं स्वार्थहानेरावश्यकत्वात् सूतकान्ताद्‌द्वितीयेऽह्नौ-त्यनेन अशौचव्यपगम एवोपलक्ष्यतामिति वाच्यं । द्वितीयेऽह्नि इत्यत्र मुख्या-र्थस्य यथाभ्युपगमात् सूतकान्त इति कृते पिष्टेऽधिकवैयर्थ्याच्च । अथ कथ-मनशौचिनामाद्यश्राद्धाधिकार इति चेत्तेषां तदर्थं सद्यःशौचाङ्गीकारादि-त्यवेति ॥ * ॥

Colophon. इति श्रीधीरश्रीनरसिंहात्मजचक्रवर्त्ति श्रीकृष्णशर्म्मविरचितोऽयं शुद्धिप्रकाशः सम्पूर्ण इति ॥ * ॥

**विषयः ।** निर्गुणाशौचनिर्णयः । अङ्गास्पर्शः । जननाङ्गास्पर्शः । अशौचे विधिनिषेधौ । बालाद्यशौचम् । विदेशस्थाशौचम् । स्त्र्यशौचम् । अशौचसङ्करः । अपहृविमदशौचम् । गर्भ-स्रावाशौचम् । सपिण्डाद्यशौचम् । सद्यः शौचादिकथनम् । प्रवसतृक्रिया । उदकदानादि-कथनम् अहारस्रवणादिनिरूपणम् । अधिकारिकथनम् । उदकानर्हनिरूपणम् । सद्यः शौचेऽपि परदिन एवाद्यश्राद्धस्य कर्त्तव्यत्वकथनम् । ग्रन्थेऽस्मिन्नेते विषया वादार्थरीत्या सम्बद्धाः ।

---

**No. 221.** शुद्धिप्रदीपिका. By कृष्णदेवस्मार्त्तवागीशभट्टाचार्य्यः. Substance, country-made paper, $17\frac{1}{2} \times 3$ inches. Folia, 50. Lines, 7 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, Sk. 1773. Place of deposit, District Medinipura, Post Office Rādhānagara, Amarapura, Paṇḍita Guruprasanna Vidyāratna. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीहरिः। अथ गर्भस्रावाशौचं।

गर्भस्रावस्य कालस्तु मासानामष्टमावधि।

तत्र षण्मासपर्य्यन्तं मासमह्नां दिनं + + ॥

अधिकं वैदिके कार्य्ये विप्राणां दिनमेककं।

शूद्राणां षड्दिनानि स्युः सूतकानामिदं स्मृतम् ॥

सप्तमाष्टमयोस्तासां स्वजात्युक्तमशौचकं।

अहोरात्रं सपिण्डानां गर्भस्रावे भवेत्तथा ॥

गर्भस्य जीवदुत्पत्तौ जन्माहे मरणेऽप्यदः।

जन्माद्यात्परमृत्यौ च जीवने नवमादिवत् ॥

जननमरणाशौचे कार्य्ये स्त्रीपुंसभेदतः।

कन्यामृत्यौ तेन स्पष्टं सद्यः शौचं भवेत्तथा ॥

बालमृत्यौ तु जन्माद्यं तत्पित्रोरेव केवलम् ॥

अशौचे दिनमासादिकं सावनमेव ग्राह्यं। तत्र सावनदिनं सूर्य्योदयादपर-सूर्य्योदयपर्य्यन्तं। मासस्च तत्त्रिंशतैवेति। इत्यादि।

**End.** मुक्तिस्तु आत्यन्तिकी दुःखनिवृत्तिः। तथाच स्वसमानाधिकरणदुःख-प्रागभावासमानकालीनदुःखध्वंसो मोक्षः। अथ मृतक्रिया। मृतस्वामि-कत्वेन आरोपात्मकक्रिया मृतक्रिया तास्तु त्रिविधा भवन्ति आद्या मध्यमा उत्तरा च। तत्राद्या दाहादिजलायुधादिस्पर्शान्ता। मध्यमा आद्यश्राद्धादि-सपिण्डीकरणान्ता। पितृदेवताकपार्वणसाम्वत्सरिकादय उत्तरा। तत्र पूर्व्वीयां परापेक्षया पूर्व्वाधिकारिणः प्राशस्त्यमतः पूर्व्वाधिकारिसत्वेऽपि पराधिकृताः सिध्यन्ति न तु स्त्रीबादिकृते वा सिद्धा। तेन पूर्व्वाधि-कारिणा पुनः पार्व्वणरदाहादिकं न करणीयं। तत्र पूर्व्वाः सर्व्वेऽधि-कारिणोऽवश्यं कुर्य्युः ॥

**Colophon.** श्रीमद्वन्द्यघटीय-महामहोपाध्याय-श्रीयुतकृष्णदेवस्मार्त्तवागीशभट्टाचार्य्यकृता शुद्धिदीपिका समाप्ता ॥

शाकेऽग्निषट्मुनिचन्द्रमिते दिनेशे-
युक्ते गते शतविधुप्रमितेऽह्नि जीवे ।
श्रीकृष्णदेवकृतशुद्धिप्रदीपिकां श्री-
वेचादिरामकुसुरो व्यलिखन्मनोज्ञाम् ॥

विषयः । गर्भस्रावाशौचनिरूपणम् । बालाद्यशौचनिरूपणम् । स्त्र्यशौचनिरूपणम् । सपिण्डाद्यशौचनिरूपणम् । मातामहादिमरणेऽशौचनिरूपणम् । अग्निविषादिजनितमृत्युविशेषाशौचनिरूपणम् । पतितमृतानां वर्णभेदेन प्रायश्चित्तभेदकथनम् । शवानुगमनाद्यशौचनिरूपणम् । अथाशौचसङ्करव्यवस्था । स्त्रीपुंसयोर्दाहकनिर्देशः । अथाशौचमध्ये वर्ज्यावर्ज्यकर्म्मनिरूपणम् । मृताशौचव्यवस्थानिरूपणम् मृतकृत्यनिरूपणम् । प्रेतश्राद्धादिनिरूपणम् । अशौचान्तकृत्यनिरूपणम् । अथ गृहादिदानव्यवस्था । मासिकादिश्राद्धव्यवस्था । सपिण्डीकरणव्यवस्था । अथ मृतक्रियानिरूपणञ्च ॥

---

No. 222. शूद्राह्निककृत्यतत्त्वप्रयोगः. By रघुनन्दनभट्टाचार्य्यः. Substance, country-made paper, $17 \times 3\frac{1}{2}$ inches. Folia, 10. Lines, 6 on a page. Extent, 225 çlokas. Character, Bengali. Date, Sk. 1735. Place of deposit, Royāil District, Dhākā, Babu Yogīndramohana Rāya. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य सच्चिदानन्दं शूद्राणां न्यायवर्त्तिनां ।
शूद्राह्निककृत्यतत्त्वञ्च वक्ति श्रीरघुनन्दनः ॥
अथाह्निककृत्यं । प्रमाणमाह्निकतत्त्वेऽनुसन्धेयं । तत्र प्रयोगः । ब्राह्मे मुहूर्त्ते इत्यादि ।

**End.** रात्रौ एकशय्यायां न शयीयातां ऋतावपि गर्भवत्त्वेऽपि कामुकीमुपेयात् ॥ ० ॥

**Colophon.** इति श्रीरघुनन्दनभट्टाचार्य्यविरचितः शूद्राह्निककृत्यतत्त्वप्रयोगः समाप्तः ॥ * । शाके शराग्न्यद्रिरसाप्रमाणे ।

विषयः । शूद्राणां आह्निककृत्यनिरूपणम् । आचमनप्रयोगः । दन्तधावनप्रयोगः । तर्पणप्रयोगादिः । वैश्वदेवादिवलिकर्म्मनिरूपणम् । भोजनविधिः । रात्रिकृत्यादिनिरूपणञ्च ।

---

**No. 223.** शुद्धिमुक्तावली. By महामहोपाध्यायः भीमः. Substance, country-made paper, 15 × 3 inches. Folia, 12. Lines, 8 on a page. Extent, 400 çlokas. Character, Bengali. Date, ? Place of deposit, Amarapura, District Medinīpura, Post Office, Rādhānagara; Paṇḍita Guruprasanna Vidyāratna. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमो विश्वेश्वराय ।
संसारवासनाबन्धशृङ्खलाच्छिद्‌रो हरिः ।
योगिचित्तसरःकेलिराजहंसोऽवताज्जगत् ॥
ईदृशानां हि संक्षेपान्निर्गुणानामियं मया ।
चतुर्णामपि वर्णानां शुद्धिमुक्तावली कृता ॥
व्युत्पत्तिं कुरुतां कण्ठे मन्दानामर्पिता सती ।
मनोहरा च मन्वादिवचनादपि भूषिता ॥
प्रथमं सामान्येन वर्णचतुष्टयेष्वपि शौचविधायकं पारिजातकं वचनमाह ।
शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥
सामान्येनाभिधाय विशेषेण जन्मप्रभृति × × × × पर्य्यन्त-मशौचमाह ।
दन्तजातेऽजाते च कृतचूडे च संस्थिते ।
अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते ॥ अस्यार्थः ।
दन्तजाते बाले अजातदन्ते वा कृतचूडे कृतोपनयने च संस्थिते सर्वे सपिण्डबान्धवाः समानोदकाश्चाशुद्धा अशौचिनो भवन्ति सूतके प्रसवे तथा अशुद्धाः सर्वे इत्यर्थः ॥ इत्यादि ॥

**End.** सपिण्डानान्तु अशौचिनामन्नभोजने न दोष एव भिन्नकुलजानां तदन्नभोजने अशौचमेव अशौचे सति पार्वणश्राद्धादौ पतिते सति अशौचान्ते तस्य कर्त्तव्यता नास्ति एकोद्दिष्टं यदि अशौचे पतितं तदा अशौचान्तदिने कर्त्तव्यमित्याह ।
देये पितॄणां श्राद्धे तु अशौचं जायते यदि ।
अशौचे तु व्यतीते वै तेषां श्राद्धं विधीयते ॥
शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या नत्वन्या वै कदाचन ॥

पितॄणां श्राद्धे देये देयकाले यद्यशौचं पतितं तदा तच्छ्राद्धं अशौचे अतीते कर्त्तव्यं । तच्छ्राद्धं केन देयमित्याकाङ्क्षायामाह शुचीभूतेनेति । सैव तिथिस्तस्य तेन श्राद्धेन × × × × भवतीत्यर्थः नतन्येति पतितत्वेन तस्यैकादश्यां तिथिविधानमस्मिन्नेव विषौदति ॥

**Colophon.** इति काञ्चिविल्लीयकुलाब्धौ + + महोपाध्याय श्रीमद्भीमकृता शुद्धि-मुक्तावली समाप्ता ॥
रवौ दुःखं सुखं सोमे भौमे मृत्युर्बुधे धनम् ।
मानं हन्ति गुरोर्वारे शुक्रे शुक्रक्षयो भवेत् ॥
शनैश्चरे सर्वदोषो नराणां क्षौरकर्म्मणि ।
शुद्धिमुक्तावलीं सारां अलिखद्भुवनेश्वरः ॥

**विषयः ।** सर्ववर्णानामशौचव्यवस्था । जननाशौचनिरूपणम् । मृत्यशौचनिरूपणम् । अशौचसाङ्कर्य्यनिरूपणम् । सत्यशौचे कार्य्याणां विधिनिषेधकथनञ्चेति ।

---

**No. 224.** श्यामासपर्य्याविधिः. By काशीनाथ भट्टाचार्य्यः. Substance, country-made paper, 12 × 5 inches. Folia, 248. Lines, 9 on a page. Extent, 6,000 çlokas. Character, Bengali. Date, ? Place of deposit, Boḍiyāgrāma, Post Office Pākuḍiyā, District Rājasāhi, Paṇḍita Çaçibhūṣana Ṭhākura. Appearance, tolerable. Verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।
साष्टाङ्गं नमनं विधाय पदयोर्भक्त्याश्रपीठे गुरो-
स्तिन्मय्याश्चरणाम्बुजे विजयदे मोक्षास्पदे चाद्भुते ।
ज्ञात्वा तन्त्रचयं विचार्य्य बहुधा वन्द्योदितः श्रीयुतः
काशीनाथधरामरः प्रतनुते श्यामासपर्य्याविधिम् । इत्यादि ।

**End.** विप्राणां मिष्टभक्षाणां चिराद्दत्तेन यत् फलम् ।
तत् फलं लभते मर्त्यः कालीति सकृदुच्चरन् ॥ शिववचने ।
तथापि ते विचारः कः काली कात्यायनीश्वरौ ।
काली कालीति कालीति स्मरन्मुक्तिमयं लभेत् ॥
शाकेऽङ्कपञ्चषष्मिते रसयुते चन्द्रे दिने भास्करे
मार्गे मासि सितेतरे चरतिथौ श्यामं सतां तुष्टये ।

काशीस्थाखिलतन्त्रमन्त्रविदुषामालोच्य सिद्धं मतं
श्यामार्चाविधिमद्भुतं सुकृतवान् सर्व्वार्थसम्पादकम् ॥

**Colophon.** इति निगमागमविद्याविद्योतितश्रीकाशीनाथभट्टाचार्य्यविरचिते सिद्धान्तसारात्मके श्यामासपर्य्याविधौ विद्यामाहात्म्यकथनं नाम सप्तमो विभागः समाप्तः ॥ * ॥ ॐ शुभमस्तु ॥

**विषयः ।** १ मे विभागे प्रातःकृत्यादिविवरणम् । २ ये विभागे अन्तर्यजनादिकथनम् । ३ ये विभागे वह्नियोगादिविवरणम् । ४ र्थे विभागे महापीठपूजादिकथनम्॰। ५ मे विभागे कुलाचारादिविवरणम् । ६ ष्ठे विभागे नैमित्तिकार्च्चनकाम्यसाधनादिनिरूपणम् । ७ मे विभागे विद्यामाहात्म्यादिकथनञ्चेति ॥

---

**No. 225. श्राद्धकालनिरूपणम् .** By **मधुसूदनवाचस्पतिः .** Substance, country-made paper, 13 × 3 inches. Folia, 6. Lines, 7 on a page. Extent, 140 çlokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna, Dhātrigrāma, Paṇḍita Ṣaṣṭhidāsa Bhaṭṭācāryya. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः शिवाय ।
नत्वा गुरुपदद्वन्द्वं तथा देवीं सरस्वतीम् ।
पार्व्वणादिक्रियाकालं वक्ति श्रीमधुसूदनः ।
पिण्डान्नाद्यार्घ्यकं श्राद्धं क्षीणे राजनि शस्यते ॥ इत्यादि ।

**End.** तस्मिन् वर्षे न श्राद्धान्तरं कर्त्तव्यं । तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते इति वचनात् ।

**Colophon.** इति श्रीमधुसूदनवाचस्पति-भट्टाचार्य्यविरचितं श्राद्धकालनिरूपणं समाप्तम् ॥
ॐ गुरवे नमः ।

**विषयः ।** पार्व्वणकालादिनिरूपणम् ॥

---

**No. 226. श्राद्धतत्त्वविवृतिः .** By **काशीरामवाचस्पतिः .** Substance, country-made paper, 17 × 3½ inches. Folia, 39. Lines, 8 on a page. Extent, 1,150 çlokas. Character, Bengali. Date, ? Place of deposit, Amarapura, District Medinipura, Post Office Rādhānagara, Paṇḍita Guruprasanna Vidyāratna. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमो गोपालाय ।

नत्वा गुरोश्चरणपद्मरजांसि मूर्द्ध्ना
श्रीकान्तकान्तचरणञ्च निधाय चित्ते ।
श्रीकाशिरामसुकृती कृतिनां हिताय
सुश्राद्धतत्त्वविवृतिं वितनोति यत्नात् ॥
स्मृतिशास्त्राम्बुधौ लीलाकृतसेतुं जगद्गुरुम् ।
विदितं त्रिषु लोकेषु नमामि रघुनन्दनम् ॥

स्वकर्त्तव्यग्रन्थसमाप्तिप्रतिबन्धकविघ्नसम्भावनास्ति अतः सम्भावितताद्दशविघ्न-नाशार्थं ग्रन्थकारः परमेश्वरप्रणामरूपमङ्गलं कृतवान् तच्च शिष्यशिक्षार्थ-मादौ निबध्नाति प्रणम्येति । सच्चिदानन्दं कर्म्मधारयसमासाश्रयणात् सत्य-ज्ञानसुखरूपमित्यर्थः एतच्च वेदान्तिमते नैयायिकमते तु सन्तौ चिदानन्दौ ज्ञानसुखे यस्य तं । वेदान्तविस्तृतं वेदान्तशास्त्रप्रकाशितं अनेन कृष्णस्य सच्चिदानन्दत्वं स्थिरीकृतं नमस्यत्वञ्च सूचितम् । इत्यादि ॥

**End.** उभौ यदि व्यतीतौ तु जीवेच्च प्रपितामहः ।
पिण्डौ निर्घृणुयात् पूर्व्वौ भोजयेत् प्रपितामहम् ॥
निर्घृणुयात् निर्व्वपेत् । विष्णुश्च —
मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः ॥
इत्येवं जीवत्पितृकश्राद्धे नानापक्षाः । छन्दोगपरिशिष्टं —
सपिण्डः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥
सपिण्डः जीवत्पितृकस्य ।
जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विजः ।
पितुः पितृभ्यो वा दद्यात् स पितेत्यपरा श्रुतिः ॥

**Colophon.** ( अतःपरं खण्डितम् ) ।

**विषयः ।** रघुनन्दनभट्टाचार्य्यकृतश्राद्धतत्त्वग्रन्थस्य व्याख्यानम् ।

---

**No. 227.** **श्राद्धप्रकरणम्** . By **नरोत्तमशर्म्मा** . Substance, country-made paper, $13 \times 2\frac{1}{2}$ inches. Folia, 16. Lines, 8 on a page. Extent, 500 çlokas. Character, Bengali. Date, ? Place of deposit, Royāil-grāma, District Ḍhākā, Bābu Yogīndramohana Rāya. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ शिवलक्ष्मनाथै नमः ।
आदौ संज्ञां विनिर्णीय ततो राशिस्थनिर्णयम् ।
व्यवस्थानिर्णयं पश्चात् करिष्यामि समासतः ॥ इत्यादि ।

**End.** तर्पणात् प्राक् वस्त्रनिष्पीड़नेन पितृलोकात् परास्तो भवति इत्यादि-ग्रन्थगौरवभयान्न लिखितम् ॥ * ॥

**Colophon.** इति नरोत्तमदेवशर्म्मणा विरचिते चूर्णके श्राद्धप्रकरणं समाप्तम् ॥ * ॥

**विषयः ।** संक्रान्तिव्यवस्थादिनिरूपणमुखेन श्राद्धादिव्यवस्थाकथनम् ।

---

**No. 228.** श्राद्धविवेकव्याख्या. By रामकृष्णतर्कपञ्चाननः. Substance, palm-leaf, 18 × 2 inches. Folia, 28. Lines, 7 on a page. Extent, 1,100 çlokas. Character, Bengali. Date, ? Place of deposit, Vĕdogrāma, Post Office Raghunāthapura, District Mānabhūma, Paṇḍita Veṇkaṭa Varadācāryya Gosvāmī. Appearance, old. Prose. Generally Correct.

**Beginning.** ॐ नमः श्रीकृष्णाय ।
कृष्णे मनः सन्निवेश्य श्वव्यकव्यग्रभोक्तरि ।
व्याख्या श्राद्धविवेकस्य रामकृष्णेन तन्यते ॥
प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयज्ञानं तदर्थमादावभिधेयनिरूपणं प्रतिजानीते । विलोक्येति । यद्यपि सर्व्वैरादौ मङ्गलं क्रियते तथाप्यनेन तन्न कृतं । विघ्नविरहनिश्चयात् कृतं वा न लिखितं । शिष्यशिक्षार्थत्वाल्लिखनस्य । प्रकारान्तरेण ज्ञास्यन्तीति । इत्यादि ॥

**End.** य एवं वेत्तीति श्राद्धविधिज्ञाने श्राद्धापदेशे श्राद्धकरणानुमतौ च श्राद्धफलं भवतीत्यर्थः । गभीरं बहनुसन्धानज्ञेयार्थकं तन्त्रं स्मृतिशास्त्रं तदेवार्णवः दुष्प्रवेश्यः तस्य पारदृश्वना तात्पर्य्यज्ञानवता । उल्लासयता वर्णयता सतां स्मृतिशास्त्रव्युत्पन्निमतां । आरम्भश्लोके(स्य)स्थौकृतं ग्रन्थनाम स्पष्टयति श्राद्ध-विवेकेति श्राद्धविवेकाख्यः संग्रह इत्यर्थः ॥ * ॥

**Colophon.** इति रामकृष्णतर्कपञ्चानन-भट्टाचार्य्यविरचिता श्राद्धविवेकटीका समाप्ता ॥ ॥ * ॥ श्रीकृष्ण प्रसीद ॥

**विषयः ।** संक्षेपेण शूलपाणिकृतस्य श्राद्धविवेकाख्यग्रन्थस्य व्याख्यानम् ।

---

**No 229** **श्रीसूक्तभाष्यम्.** By **रामचन्द्रः.** Substance, country-made paper, 7×3 inches. Folia, 5. Lines, 14 on a page. Extent, 60 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।
श्रुतिकञ्जार्थलक्ष्मीं यो विकासयति हृद्गतः ।
स पायात् सच्चिदानन्दः सूर्य्यमण्डलगो हरिः । इत्यादि ।

**End.** अथ पञ्चदशी तां सखावहेति । इयमृग्व्याख्यानपरा । एतावांस्तु विशेषः ॥

**Colophon.** इति श्रीसूक्ते तृतीयो वर्गः ॥ इति श्रीमदत्रिगोत्रोद्भूत-रामचन्द्रविरचितं वैदिकपाठानुकारि-श्रीसूक्तभाष्यं सम्पूर्णम् ॥

**विषयः ।** श्रीसूक्तस्य व्याख्यानम् ।

---

**No. 230.** **सङ्केतसारावली.** By **शिवरामशर्म्मा.** Substance, palm-leaf, 15×1½ inches. Folia, 12. Lines, 3 on a page. Extent, 100 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Vikramapura Vidgā̃, Paṇḍita Ānandacandra Vidyālaṅkāra. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** ॐ नमः परमदेवतायै ।
प्राचीनतन्त्राण्यवलोक्य यत्नाद्-
गुरूपदेशं हृदये निधाय ।
संक्षेपतः श्रीशिवरामशर्म्मा
सङ्केतसारावलिमातनोति ॥
सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम् ।
तदर्कांशो भवेद्राशिर्मेषवर्षचरणाङ्कितः ॥ इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः ।** राशिस्वरूपकथनम् । राशीनां कालबलादिकथनम् । कालवेलादिकथनञ्चेति ।

---

**No. 231.** संक्षिप्तसारव्याख्या ( सुबन्तपादः ) ( भावार्थदीपिकानाम्नी ). By महेशपञ्चाननः. Substance, country-made paper, 16 × 3 inches. Folia, 17. Lines, 10 on a page. Extent, 700 çlokas. Character, Bengali. Date, Sk. 1812. Place of deposit, Dakṣiṇakhaṇḍa, District Bardhamāna, Post Office Ukhaḍā, Çrī Gauraguṇānanda Ṭhākura. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीकृष्णचैतन्यः । ननु षट् इत्यादिसिद्धपदे षकारटकारौ × × × × ककारादिवर्णा न स्थिताः किं ... ... ... ... । प्रकृतिप्रत्यये च स्थितम् । इत्यादि ।

**End.** समास एतद्विधानमित्यस्य फलमाह असमासे त्वित्यादि । ननु पञ्चमी चेत्यत्र स्वरांशपत्या(?) पृथक्करणं स्वीकृतं तर्हि पञ्चमी भवति कथं सप्तमीत्यत-आह अथवेत्यादि ।

**Colophon.** इति श्रीविद्यार्णवात्मजश्रीमहेशपञ्चाननविरचितायां संक्षिप्तसारटीकाभावा-र्थदीपिकायां सुबन्तपादटीका भावार्थदीपिका समाप्ता ॥ शकाब्दाः १८१२ ।

**विषयः ।** संक्षिप्तसारव्याकरणस्य सुबन्तपादस्य व्याख्यानम् ।

---

**No. 232.** संक्षिप्तसारटीका ( सन्धिपादः ) ( सारार्थदीपिकानाम्नी ). By गोपालचक्रवर्त्ती. Substance, country-made paper, 14 × 3 inches. Folia, 29. Lines, 8 on a page. Extent, 750 çlokas. Character, Bengali. Date, ? Place of deposit, Dakṣiṇakhaṇḍa, District Bardhamāna, Post Office Ukhaḍā, Çrī Gauraguṇānanda Ṭhākura. Appearance, fresh. Prose. Correct.

**Beginning.** ॐ श्रीकृष्णचैतन्यः ।

यः सर्व्वेषां सततमनुसरन् भाति तत्तत्स्वरूपो
दूरे वाचामपि च मनसां योऽन्तिकस्थोऽपि नित्यम् ।
यस्माद्विश्वं जगदपि च स सच्चिदानन्दमूर्त्ति-
र्विश्वग्रगतिर्जयति निरतां सर्व्वदो माधवः सः ॥
शम्भोर्बद्धवपु र्विरिञ्चिजननी वक्षःस्थलस्था हरे-
र्या सर्व्वैरपि वन्दिताङ्घ्रियुगला सूते त्वशेषं जगत् ।
वाणी वाङ्मयदेवताखिलमयी सर्व्वैरगम्यापि या
तां वन्दे निजभक्तकल्पलतिकां सच्चिन्मयीमम्बिकाम् ॥

आलक्ष्य टिप्पनीसारं विज्ञाय गौरवं मतम् ।
गोपालस्तनुते स्वरिसुटे सारार्थदीपिकाम् ॥
वृन्दारकवृन्दपरिवन्दितपादारविन्दद्वन्द्वश्रीकृष्णिपुरश्वरनमस्कार एव परम-
मङ्गलमिति श्रीशिवप्रणामरूपमङ्गलं ग्रन्थकृदाचरति शिवमित्यादि ।

End. खण्डितत्वात् शेषो नास्ति ।

विषयः । संक्षिप्तसारव्याकरणस्य सन्धिपादव्याख्यानम् ।

---

No. 233. संक्षेपज्योतिराकरः. By रामगोविन्दचक्रवर्त्ती. Substance, palm-leaf, 14×2 inches. Folia, 42. Lines, 3 on a page. Extent, 550 çlokas. Character, Bengali. Date, Sk. 1715. Place of deposit, Vidgā, District Ḍhākā, Vikramapura, Paṇḍita Ānandacandra Vidyalaṃkāra. Appearance, tolerable. Verse. Generally correct.

Beginning. ॐ नमो गणेशाय ।
देवतायाः पदद्वन्द्वं प्रकृतेः पुरुषस्य च ।
श्रीगुरोः पादपद्मञ्च नत्वा श्रीरामकृष्णजः ॥
भूदेवो रामगोविन्दः शिशूनामाशुबुद्धये ।
शास्त्रं ज्यौतिषमतिसंक्षेपात् तनोति ज्योतिराकरम् ॥
अथ दिननिर्णयः ।
रविः सोमः कुजश्चैव बुधो जीवः सितः शनिः ।
एतेषां नामतो वाराः सप्तैव कथिताः क्रमात् ॥ इत्यादि ।

End. यात्रां त्रिपक्षसप्ताहात् पुनर्भद्रेण योजयेत् ।
केचिदिदं कलावाप्तौ यात्रा परिसमाप्यते ॥
इति यात्राविधिः ॥ * ॥

Colophon. इति श्रीरामगोविन्दचक्रवर्त्तिविरचितः अतिसंक्षेपज्योतिराकरः समाप्तः ॥ * ॥
बाणेन्दवौ तथा चन्द्रे शाकेऽतीते सुनिश्चितम् ।
कालीनाथद्विजेनेदं सश्रीकेनैव लिख्यते ॥ * ॥

विषयः । दिनकथनम् । तिथिनिरूपणम् । पापयोगादिकथनम् । विष्टिभद्रादिकथनम् । रविग्रहादिकथनम् । विवाहादिविहिततिथ्यादिकथनम् । अन्नाशयारम्भदिनादिकथनम् । रविसंक्रान्त्यादिनिरूपणम् । पताकावेधादिकथनम् । नाक्षत्रिकदशादिनिरूपणम् । यात्राविध्यादिकथनञ्चेति ॥

---

**No. 234.** **सङ्गीतसारसङ्ग्रहः.** Substance, country-made paper, 8 x 5 inches. Folia, 43. Lines, 8 on a page. Extent, 550 çlokas. Character, Bāngālā. Date, ? Place of deposit, Sayāḍasol, District Bardhamāna, Çrī Candrānanda Ṭhākura. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाय नमः ।

श्रीगोविन्दं प्रणम्यादौ गीतशास्त्रैकहेतवे ।
संक्षेपादथ वक्ष्येऽहं सङ्गीतसारसंग्रहम् ॥
अथ सङ्गीतोत्पत्तिमाह ।
पुरा चतुर्णां वेदानां सारमाकृष्य पद्मभूः ।
इदन्तु पञ्चमं वेदं सङ्गीताख्यमकल्पयत् ॥ इत्यादि ।

**End.** उत्तमो मध्यमः प्रोक्तो गुणैः कतिपयैरिति ।
गुणयुक्तोऽपि दोषोऽस्तु उच्यते सोऽपि पञ्चधा ॥
अतःपरं खण्डितम् ।

**विषयः ।** सङ्गीतोत्पत्तिनिरूपणम् । मूर्च्छनादिनिरूपणम् । रागादिनिरूपणम् । नायकलक्षणादिकथनम् । भाषादिनिरूपणम् । वाद्यादिनिरूपणम् । अतःपरं खण्डितम् ।

---

**No. 235.** **सत्क्रियासारदीपिका.** By **गोपालभट्टः.** Substance, foolscap paper, 13 x $4\frac{1}{2}$ inches. Folia, 72. Lines, 8 on a page. Extent, 2,300 çlokas. Character, Nāgara. Date, Sm. 1949. Place of deposit, Lohajaŋga, District Ḍhākā, Vikramapura, Bābu Mukunda Lāla Pāla Caudhurī. Appearance, fresh. Prose. Generally correct.

**Beginning.** श्रीराधारमणो जयति ।

प्रणम्य सच्चिदानन्दं जगतां श्रेयमीश्वरम् ।
श्रीकृष्णं परमानन्दमनन्याभीष्टदायकम् ॥
वक्ति स्वच्छद्विजातीनामनन्यानां विशेषतः ।
पद्धतिं तां विचार्यादैः सत्क्रियासारदीपिकाम् ॥
श्रीमद्गोपालभट्टोऽयं साधूनामाज्ञया श्रमम् ।
भगवद्धर्म्मरक्षार्थं भक्तानां वैदिकी तु या ॥
कृता याप्यनिबन्धेन भीमभट्टेन या कृता ।
... ... ... ... ... ... ॥

सङ्करान्त्यजादीनां गृहस्थाश्रमिणां पितृदेवार्चनादिकं क्वापि वेदे लोके धर्मशास्त्रागमस्मृतिपुराणादौ च नास्ति तेषामेतत्कृत्ये सत्यपि तेषामात्मनो ऽपराधो जायते तत्र प्रथमं अथर्ववेदः श्रीनारायणोपनिषत् प्रमाणमाह । ॐ अथ पुरुषो वै नारायणोऽकामयत इत्यादि ।

End. तदा कर्मकार पितृब्राह्मणाय दक्षिणां दद्यात् । अपरब्राह्मणेभ्यश्च दक्षिणां दद्यात् । तथा काष्ठादिवैष्णवसेवा जीवसन्तर्पणञ्च कुर्य्यात् । अथवा अन्य आचार्य्यः । तदा तस्मै दक्षिणां दद्यात् ।

Colophon. इति श्रीसमावर्त्तनक्रमः समाप्तः ॥ संवत् १९४९ ॥ किशोरीलालकायस्थ वृन्दावननिवासी ॥

विषयः । द्विजशूद्रादीनां विवाहादिविधिस्तत्प्रयोगादिनिरूपणञ्च ।

---

**No. 236.** सत्स्मृतिसारः. By जानकीरामसार्व्वभौमः. Substance, country-made paper, 10×6 inches. Folia, 7. Lines, 14 on a page. Extent, 125 çlokas. Character, Bengali. Date, ? Place of deposit, Puṭhiyā, District Rājasāhi; Paṇḍita Guruprasāda Çiromaṇi. Appearance, old. Prose. Correct.

ॐ नमः श्रीकृष्णाय ।
आनन्दकन्दं दिविषद्विवन्द्यं
विवन्द्य गोविन्दपदारविन्दम् ।
श्रीजानकीराम × सार्व्वभौमः
समतनोत् सत्स्मृतिसारमेतम् ॥

End. खण्डितत्वात् शेषो नास्ति ।

विषयः । तिथि-शौचप्रायश्चित्तादेर्व्यवस्थानिरूपणम् ।

---

**No. 237.** सनत्कुमारसंहिता (शिवपुराणीया). Substance, country-made paper, 14×5½ inches. Folia, 101. Lines, 11 on a page. Extent, 3,500 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

Beginning. श्रीगणपतये नमः । अथ सनत्कुमारसंहिता लिख्यते ।
प्रपद्ये देवमीशानं सर्व्वज्ञमपराजितम् ।
सर्व्वभूतानामनादिं विश्वतोमुखम् ॥

वेदादौ यः स्वरः प्रोक्त उकाराख्यो महेश्वरः ।
सृजते सर्व्वभूतानि पञ्चमूर्त्तैः सदाशिवः ॥
तस्य चिन्ताप्रभावेण ब्रह्मणा विहितं जगत् ।
तद्भक्त्या सम्प्रवक्ष्यामि पुराणं शिवभाषितम् ॥
नैमिषाख्याश्रमपदे पुण्ये पूर्व्वं मयोद्धृते ।
पराशरस्य दायादः श्रीमान् सत्यवतीसुतः ॥
ब्रह्मर्षिः स च धर्म्मात्मा काले योगविदांवरः ।
गुरुर्लोकस्य धर्म्मात्मा ब्रह्मचारी तपोनिधिः ॥
ऋषिसङ्घैः परिवृतः श्रुत्यर्थं योऽवदत् पुरा ।
भारते शतसाहस्त्र्यां संहितायां कवीश्वरः ॥
तेषां सुखोपविष्टानां कथां कथयतां पराम् ।
तत्राजगाम धर्म्मात्मा ब्रह्मपस्तनयः शुभः ॥
... ... ... ... ... ... ।
पृष्टस्तु ऋषिभिस्तत्र ब्रह्मपुत्रो महामुनिः ॥
लिङ्गार्च्चनविधिञ्चैव देवदेवस्य पूजनम् ।
प्रसादस्य च यत् पुण्यं देवदेवस्य धीमतः ॥
संवत्सरस्य यत् पुण्यं शिवस्य परमं सुखम् ।
आवर्त्तनविधिञ्चैव पुनरावर्त्तिकं तथा ॥
मूर्त्तीनां प्रविभागस्य मन्त्रस्य परमं विधिम् ।
... ... ... ... रुद्रस्य तु महात्मनः ॥ इत्यादि

**End.** पितॄणामृत्तिदं (?) श्राद्धे पठमानमिदं शुभम् ।
दुष्ट + + दुष्कर्म्मकलि + + + नाशनम् ॥
अथ + + श्लोकं श्लोकार्द्धं वा समाहितः ।
श्रद्धया भक्तियुक्तो वा तस्य प्रीतो भवेत् शिवः ॥
ॐ शङ्कर + + + स्पदम् ।

**Colophon.** इति श्रीसनत्कुमारप्रोक्तं शिवपुराणं समाप्तम् ॥

**विषय: ।** इति श्रीशिवमहापुराणे चतुर्विंशतिसाहस्र्यां संहितायां सनत्कुमारसंहितायां प्रथमोऽध्यायः । द्वितीयोऽध्यायः । सप्तद्वीपवर्णनं नाम तृतीयोऽध्यायः । चतुर्थोऽध्यायः । भुवनकोशवर्णनं नाम पञ्चमोऽध्यायः । ब्रह्मगीतोपाख्यानं नाम षष्ठोऽध्यायः । सप्तमोऽध्यायः । अष्टमोऽध्यायः । नवमोऽध्यायः । शिववर्णने दशमोऽध्यायः । एकादशोऽध्यायः । शिवमाहात्म्ये द्वादशो-

ऽध्यायः । त्रयोदशोऽध्यायः । शिवभीमसंवादे चतुर्दशोऽध्यायः । शिवभूतो नाम । (अध्याय संख्या नास्ति) पुष्पदानमाहात्म्यम् । पुष्पादिदानसमावेशः । उपवासविधिर्नाम । अष्टमीविधिः । अष्टमीव्रतम् । दानधर्मः । नियमोपदेशः । भजनकीर्त्तनं नाम (?) भूतिकीर्त्तनं नाम । शिवार्चनफलकं नाम । दुर्वाससोपनिषत् । नारदसंवादः । इन्द्रपापविवरदानं नाम । पञ्चायतनवर्णनं नाम । अविमुक्तमाहात्म्यं नाम । नन्द्युपाख्यानम् । नन्द्यभिषेको नाम । नन्द्युपाख्याने नन्दिविवादः । नीलकण्ठोपाख्यानम् । त्रिपुरवधोपाख्यानम् । त्रिपुरदाहो नाम । आत्मप्रमाहात्म्यम् । योगविधिकथनं नाम । इति श्रीसनत्कुमारप्रोक्तं समाप्तम् ।

---

**No. 238. सनत्कुमारसंहिता.** Substance, country-made paper, 10 × 3 inches. Folia, 84. Lines, 5 on a page. Extent, 550 çlokas. Character, Nāgara. Date, Sm. 1935. Place of deposit, Mahārājā's Library, Hātuā. Appearance, fresh. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । अथ श्रीसनत्कुमारसंहितायां पटल लिख्यते (?) ।

श्रीसनत्कुमार उवाच ।

भो ब्रह्मन् ब्रह्मतत्त्वज्ञ ब्रह्मज्ञानविशारद ।

त्वत्तोऽहं श्रोतुमिच्छामि रहस्यं परमाद्भुतम् ॥ इत्यादि ।

**End.** युष्माकं चैव संसिद्धिर्भविष्यति न संशयः ॥ * ॥

**Colophon.** इति श्रीसनत्कुमारसंहितायां सदाशिवसनकसंवादे पञ्चविंशः पटलः ॥ * ॥ संवत् १९३५ ॥

**विषयः ।** अत्र पटलाः पञ्च वर्ण्यन्ते तद्यथा ॥ १ ॥ इति श्रीसनत्कुमारसंहितायां शौनकसदाशिवसंवादे २१ शः पटलः ॥ २ ॥ इति श्रीस० सं० सदाशिवसनत्कुमारसंवादे २२ शः पटलः ॥ ३ ॥ इति श्रीस० सं० सदाशिवसनकसंवादे २३ शः पटलः ॥ ४ ॥ इति श्रीस० सं० २४ शः पटलः ॥ ५ ॥ इति श्रीसनत्कुमारसंहितायां सदाशिवसनकसंवादे पञ्चविंशः पटलः ॥

---

**No. 239. सन्धिटीका (संक्षिप्तसारटीका). By वंशीवदनः.** Substance, country-made paper, 13 × 3 inches. Folia, 16. Lines, 13 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, ? Place of deposit, Kājoḍā *viâ* Aṇḍāl Çrī Murāri Bhaṭṭācāryya. Appearance, tolerable. Prose. Generally correct.

Beginning. ॐ नमो विघ्नेश्वराय ।
रामं नत्वा गुरुं तेषां मतान्यालोक्य यत्नतः ।
संक्षिप्तसारटीकार्थे नवकार्थं प्रकाश्यते ॥
ग्रन्थारम्भे सकलशिष्टैकवाक्यतया विधेयत्वेन परिप्राप्तम् । इत्यादि ।

End. सर्व्वमनुकरणेनेति सन्धिः अन्यथा सन्देहः स्यात् । नित्यसन्धिर्वैकल्पिक-त्वात् विकल्पोदाहरणमाह किं घनेन इत्यादि ॥ • ॥

Colophon. श्रीवंशीवदनं विशिष्टनयनं विद्वज्जनप्रीणनं
सूते रायमती सती मतिमती श्रीमान् वशिष्ठः स्वयम् ।
व्याकारे क्रमदीश्वरेण रचिते श्रीनन्दिना शोधिते
गोयीचन्द्रकृते तु तद्विरचिते पादोऽयमादिर्गतः ॥
श्रीराधाकृष्णः ॥ * ॥

विषयः । संक्षिप्तसारव्याकरणस्य सन्धिपादस्य व्याख्यानम् ।

---

No. 240. सभाकौस्तुभः. By रामनारायणमिश्रदासः. Substance, country-made paper, 14×4 inches. Folia, 143. Lines, 9 on a page. Extent, 4,500 çlokas. Character, Bengali. Date, ? Place of deposit, Royāil, District Ḍhākā, Bābu Yogindramohana Rāya. Appearance, tolerable. Verse. Generally correct.

Beginning. या शब्दशक्तिरथ वाचकवाच्यरूपा
ज्योतिर्मयी त्रिगुणया विदधाति मूर्त्त्या ।
श्रीरामनारायणमिश्रदासः
सानन्दमुन्मथ्य सुकाव्यसिन्धुम् ।
स्फुरत् सभाकौस्तुभमुत्तमं मुदा
सतां मुदे स प्रकटीकरोति ॥
नानाकाव्यविचारचारुचतुरैर्धीरैरुदारैः समम्
सत्काव्यानि विचार्य्य पण्डितवरैः प्रोद्यत्सभाकौस्तुभः ।
विश्वामित्रकुलोद्भवेन सहसा सन्नीतिविस्फूर्जित-
सेनापद मया कयापिच हरौ भक्त्या समुन्नीयते ॥
आदिष्टोऽस्मि सकलजनधिनेत्तावलम्बिनेनाघवये नितकालमाननिखिल-

भूपालमौलिमालाभिरामुकुटतटनटन्मणिमरीचिमञ्जरीपुञ्जपिञ्जरितमञ्जुपादाम्बुज दिल्लीश्वरालमगीरश्रीमदौरङ्गजेबसाहा-देव-गौड़राज्यसाम्राज्याभिषिक्तेन करालकलिकालकालकरालकवलितदैन्यदावामलदह्यमानजगतीपीयूषधाराधरेण प्रचण्डभुजदण्डचण्डिमाकर्णकुण्डलितकोदण्डच्छिद्यमानकाण्डप्रकाण्डताण्डवसमुत्थारितवैरिनिकरेण शौर्य्यौदार्य्यधैर्य्यदयादाक्षिण्यविनयाद्यनेकगुणगरिमसमुपचितसत्कीर्त्तिकर्पूरपूरपूरिताखिलदिङ्मण्डलेन विचित्रचित्रगुप्तादिविविधानवद्यविद्याविद्याधरीविहारागारोत्तरराढ़ीय-कायस्थकुलतिलकातिशयसहृदयहृदयकुशेशयप्रकाशनमित्र-मित्रवंशसदृशपवित्रविश्वामित्रगोत्रप्रवरवङ्गेश्वरश्रीमत्श्रीहरिनारायणरायसदीश्वरेण यथावत् सामात्यवरानवरतश्रुतिस्मृतीतिहासपुराणादिसकलशास्त्रव्याख्याविचक्षणानुचणपरीक्षणनिपुणा ... ... ... ... तेषां भवतीति नीतिप्रभृतिसकलशास्त्राणां सारमाकलय्य सभाप्रस्तावोपयोगिसंदर्भमेकं विरचयेति मङ्गलादिमयूखैः मया सभाकौस्तुभः समुन्नीयते ॥ इत्यादि

**End.** प्राणः प्राणभृतामन्नमन्नं लोकोऽभिधावति ।
अन्नप्रसादात् सौकर्य्यं जीवितं प्रतिभा सुखम् ॥
तुष्टिः पुष्टिर्बलं मेधा सर्व्वमन्ने प्रतिष्ठितम् ।
लौकिकं कर्म्म यद्दृष्टौ स्वगतौ यच्च वैदिकम् ॥
कर्म्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ * ॥

**Colophon.** इति श्रीदर्पनारायणरायसमुन्नीतसभाकौस्तुभे द्रव्यगुणमयूखः समाप्तः ॥ श्रीरह शाकेन्दुखाक्षसप्ततुरगै(?)र्मासे तुलाराशिके मत्वा शम्भोः पदद्वयं लिपिरियम्

**विषयः ।** मङ्गलादिनिरूपणम् । धर्म्मादिनिरूपणम् । पातकादिनिरूपणम् । पण्डितादिप्रशंसा । गुणप्रशंसा । दुर्जनादीनां निन्दा । याचकनिन्दा । दरिद्रनिन्दा । मूर्खादीननिन्दा । सदाचारादिनिरूपणम् । उपदेशादिकथनम् । रसादिनिरूपणम् । अलङ्कारनिरूपणम् । सम्भोगशृङ्गारादिकथनम् । तथा विप्रलम्भशृङ्गारादिकथनम् । राशिनक्षत्रादिनिरूपणम् मृत्युयोगादिकथनम् । द्रव्यगुणादिनिरूपणञ्चेति ।

---

**No. 241.** समयाचारतन्त्रम् . Substance, country-made paper, 18 × inches. Folia, 30. Lines, 7 on a page. Extent, 900 çlokas. Characte: Bengali. Date, ? Place of deposit, Pākuḍiyā, District Rājsāh Paṇḍita Kālidāsa Ṭhākura. Appearance, old. Verse. Generally correc

**Beginning.** ॐ परदेवतायै नमः । श्रीदेव्युवाच ।

भगवन् सर्व्वदेवेश चित्स्वरूप सदाशिव ।

कथितं सर्व्वतन्त्रेषु नैपुरं ज्ञानमुत्तमम् ॥

शिवशक्त्यात्मकं यत्तु समयाख्यं परात्परम् ।

परं ब्रह्मेति विख्यातं सर्व्वशास्त्रेषु गोपितम् ॥

अन्यत् किञ्चिदतो नास्ति निश्चितं मनसि प्रभो । इत्यादि ।

**End.** खण्डितत्वात् शेषो नास्ति ।

**विषयः।** १ मे पटले नित्यानन्दज्ञानादिकथनम् । २ ये रहस्ययोगादिकथनम् । ३ ये परमाविद्यावीजादिकथनम् । ४ र्थे विद्यासाधनादिप्रकारः । ५ मे पूजारहस्यादिकथनम् । ६ ष्ठे मुद्रादिकथनम् । ७ मे कुण्डहोमसाधनादिप्रकारः । ८ मे वीजादिसाधनप्रकारः । ९ मे भावनिर्णयश्च । अतःपरं खण्डितम् ।

---

**No. 242.** सर्व्वसाधारणप्रमाणतत्त्वम्. Substance, palm-leaf, $10 \times 1\frac{1}{2}$ inches. Folia, 34. Lines, 3 on a page. Extent, 350 çlokas. Character, Bengali. Date, ? Place of deposit, Āḍāihājār, District Ḍhākā, Paṇḍita Candrakānta Vidyālaṇkārā. Appearance, old. Verse. Incorrect.

**Beginning.** ॐ नमो गणेशाय । अथ सर्व्वसाधारणप्रमाणतत्त्वम् ।

मरणादेरकर्म्मण्ये संयोगो यस्य नाग्निना ।

दाहादूर्द्धमशौचं स्याद् यस्य वैतानिको विधिः ॥

प्रक्षिप्याग्निं स्वदारेषु परिकल्प्य द्विजं तथा ।

प्रविशेत् कार्य्यवान् ... ... यथैव न चिरं क्वचित् ॥

रात्रावेव समुत्पन्ने मृते ... ... ... सूतके ।

पूर्व्वमेव दिनं ग्राह्यं यावन्नैवोदितो रविः ॥

उदिते तु यदा सूर्य्ये नारीणां दृश्यते रजः ।

जननं वा विपत्तिर्व्वा यस्या ... ... शर्व्वरी ॥ इत्यादि ।

**End.** नोपतिष्ठति यः पूर्व्वां नोपास्ते यश्च पश्चिमाम् ।

स शूद्रवत् वहिष्कार्य्यः सर्व्वस्माद् द्विजकर्म्मणः ॥

ऊर्द्धमग्नो हि यो विप्रः आलयेश्वरणद्वयम् ।

तज्जलं पितृमुखे दद्यात् आत्मानं नरकं व्रजेत् ॥ (?)

सन्ध्या येन न विज्ञाता सन्ध्यां येनाप्युपासते ।

जीवन्नेव भवेच्छूद्रो मृतः श्वाभिजायते ॥
ॐकारोच्चारणाद्दोषात् शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥
... ... ... ... ... ... ... ... ।
सङ्कल्पो नैव कर्त्तव्यो ग्रहणे च कदाचन ॥
गृहीत्वौदुम्बरं पात्रं वारिपूर्णं गुणान्वितम् ।
दर्भत्रयं साग्रमूलं फलपुष्पसमन्वितम् ।
जलाशयारामकूपे संकल्पः पूर्व्वदिङ्मुखः ॥

**Colophon.** ( समाप्तिसूचकं वाक्यं नास्ति । )

**विषयः ।** चूडोपनयनकालनिरूपणम् । पिण्डदानकाले रजस्वलायाः कर्त्तव्यनिरूपणम् । श्राद्धविघ्नप्रमाणकथनम् । सपिण्डीकरणात् परं मासिकानामकर्त्तव्यत्वकथनम् । तिलदानविधिः । क्षौरसाधनादिकालनिरूपणम् । पञ्चश्राद्धादिविधिः । तिथिविशेषे कुष्माण्डादिनिषिद्धवस्तुनिरूपणम् । आचमनादिनिरूपणम् । क्षौरकर्म्मविधिः । भूम्यादिदाने फलविशेषकथनम् । रविसंक्रमणादिनिरूपणम् । नवान्नकालनिरूपणम् । सापिण्ड्यविचारः गोत्रप्रवरपितृमातृबन्धुनिरूपणम् । पूजाविधानम् । अग्नेर्नामकरणम् । चरणक्षालनविधिः । शूद्राणां शालग्रामादिपूजानिषेधकथनम् । सङ्कल्पपात्रनिर्णयश्चेति ॥

---

**No. 243.** सर्व्वानुक्रमणीवृत्तिः. By षड्गुरुशिष्यः. Substance, country-made paper, 10×3 inches. Folia, 102. Lines, 13 on a page. Extent, 3,340 çlokas. Character, Nāgara. Date, Sm. 1830. Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः । अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीक ऋक्संख्या ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशम् । अथेति मङ्गले प्रस्तावे वा ऋगंशवाक्स्यादृग्वेदः । इत्यादि !

**End.** आश्वलायनकल्पसूत्रस्य चतुर्थारण्यकेषु तु । प्रत्यध्यायसमाप्तावपि द्विर्वचनं दृष्टं वागुदिता भवति भवतीत्यादि ।

**Colophon.** इति षड्गुरुशिष्यविरचिता सर्व्वानुक्रमणीवृत्तिः समाप्ता ॥ शुभमस्तु । संवत् १८३० ।

**विषयः ।** ऋग्वेदीयसर्व्वानुक्रमव्याख्या ।

---

**No. 244.** साङ्कर्षकाण्डभाष्यम् . Substance, country-made paper, 10 × 3½ inches. Folia, 87. Lines, 9 on a page. Extent, 1,957 çlokas. Character, Nāgara. Date, Sm. 1864. Place of deposit, Benares City, Gobinda Bhaṭṭa Solāpurkār. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।
एवं द्वादशभिरध्यायैः प्रकृतिविकृतिभेदेन कतिपयान् न्यायान् संशोध्य तैरेव न्यायैरितस्ततो विप्रकीर्णान् वेदवाक्यार्थानिदम्परेण सम्यङ्निष्कृष्य-निर्णेतुमेषा चतुरध्याय्यारभ्यते । इत्यादि ।

**End.** जैमिनेर्विमलसूक्तितटिन्यां
मग्नमाप शुचितां मम चेतः ।
तेन खेलतु पिनाकिपदाब्जे
येन जन्मनिबन्धो न पुनः स्यात् ॥

**Colophon.** इति श्रीसाङ्कर्षे भट्टदीपिकायां षोडशस्याध्यायस्य चतुर्थः पादः ॥ * ॥
संवत् १८६४ ।

**विषयः ।** भाट्टदीपिकाख्य मीमांसाग्रन्थस्य साङ्कर्षकाण्डस्य व्याख्यानम् ।

---

**No. 245.** सारावली, By नारायणवन्द्योपाध्यायः . Substance, country-made paper, 16 × 3½ inches. Folia, 152. Lines, 6 on a page. Extent, 3,200 çlokas. Character, Bengali. Date, ? Place of deposit, District Hugli, Kṛṣṇanagara, Paṇḍita Bramhanārāyaṇa Vidyālaṃkāra. Appearance, tolerable. Prose. Correct.

**Beginning.** श्रीरामः शरणम् ।
श्रीरामं जगतामीशं प्रणम्य तस्य तुष्टये ।
सारावलीं प्रतनुते श्रीलनारायणः सुधीः ॥
इहिरादिरन्तालेनेकोऽचः । अचः स्थाने आत् ऐच् आर् आल् एच् ऐच् इत्येते आदेशा इडिः परिभाष्यन्ते । अ इ उ ण ऋ ऌ क ए ओ ङ ऐ औ च प्रत्याहारार्थोऽयं निर्देश स्तेनाजित्यनेन अ इ उ ऋ ऌ ए ऐ ओ औ. ऐजि × × एवमन्ये। प्रत्याहारेषु च ह्रस्वोक्त्या दीर्घोऽपि गृह्यते। इत्यादि ।

**End.** धात्तोस्तु । तुनायिका सुपादिका
त्यतमोस्तु । इत्यिका दाक्षिणात्यिका

श्रीनियतस्याच । खड़्गिका खट्वाङ्का ।

Colophon. इति श्रीनारायण-वन्द्योपाध्यायकृतौ सारावल्यां तद्धितपादः समाप्तः ॥

---

No. 246. साहित्यरत्नाकरः. Substance, country-made paper, 13 × 2½ inches. Folia, 30. Lines, 7 on a page. Extent, 850 çlokas. Character, Bengali. Date, ? Place of deposit, Kājodā grāma *viâ* Aṇḍāl, Bābu Yatīndranātha Nāyek. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ श्रीरामचन्द्राय नमः ।

आलिङ्ग्य गाढमुदरं पितुरङ्कजाने
यत्प्रत्यवस्थितवतु बालगजाननो नः ।
यत्कुम्भयोर्गिरिसुताकुचपार्श्वभाजोः
स्तन्यं पिपासति गुहस्तिभिराननाङ्कैः ॥
श्रेयो मे विदधातु शारदशशिश्रीभासुरा भासुरा
साराखारनिवासकारिमधुरव्याहारिणी हारिणी ।
मुक्ताभूषणपोषणस्मितलवश्रीसाधुना साधुना
लावण्येन निजेन निर्जितवती रम्भावती भारती ॥
नुमः स्तुमः कर्दमदुर्दमाम्बुधिप्रनष्टचेष्टाखिलजन्तुसन्ततिम् ।
सोयं स्वप्रतिभादयम्भिकषणप्रोद्दीप्रषड्दर्शनी-
रत्नमङ्मयकन्धरो यदनुजो रामाश्रयः पण्डितः ।
तस्मात् पर्व्वतनाथसूरिजलधेः श्रीमत्क्रमस्त्रोविय-
द्व्यासङ्गजुषो लसद्गुणमयेर्यस्योदयश्चन्द्रवत् ॥
सोऽहं धर्म्मसुधीर्गवां विलसितैः कर्त्तुं रसाङ्क्रिया
संस्फूर्त्तिं समुदक्षयेयमधुना साहित्यरत्नाकरम् । इत्यादि ।

**End.** अत निजकुलकूटस्थस्य मार्त्तण्डस्य पुनःपुनर्म्मण्डलभेदो माभूदित्यभिसन्धानात्म-
कस्यामरद्विषद्मारणकारणस्यार्थस्य गूढत्वाद्गाम्भीर्य्यम् । उक्तोदाहरणान्येव
सौशब्द्यस्योदाहरणानि द्रष्टव्यानि ।
एवं सूक्ष्मधियां मार्गमाश्रित्योदाहृतं मया ।
माधुर्य्यौजःप्रसादास्तु सौशब्द्येन समन्विताः ॥
गुणास्त्वार एवैते मम सूक्ष्मतरेक्षितुः ।
चय एवेति वात्यर्थं मनसे रोचते मतम् ॥ * ॥

**Colophon.** इति श्रीमत्त्रिभुवनपवित्रचरित्रगोत्रावतंस-वाराणसीवंशपद्माकरप्रभातभानुना पर्व्वनाथसूनुना सकलकलाविश्रामवता धर्मसंख्यावता विरचिते श्रीरघुकुलतिलकगुणमणिधामनि साहित्यरत्नाकरनामन्यलङ्कारशास्त्रे गुणनिरूपणं नाम पञ्चमस्तरङ्गः ॥ अतः परं खण्डितम् ।

**विषयः ।** १ मे तरङ्गे ग्रन्थारम्भसमर्थनादिः । २ ये तरङ्गे वाचकशब्दार्थादिनिरूपणम् । ३ ये तरङ्गे लक्ष्यशब्दादिनिरूपणम् । ४ र्थे तरङ्गे व्यञ्जकशब्दार्थादिनिरूपणम् । ५ मे तरङ्गे गुणनिरूपणम् ॥

---

**No. 247.** सिद्धिखण्डः ( मन्त्रसारीयः ) . By नित्यनाथसिद्धः. Substance, country-made paper, 17 × 6 inches. Folia, 13. Lines, 12 on a page. Extent, 325 çlokas. Character, Nāgara. Date, Sm. 1876. Place of deposit, District Medinīpura, Candrakoṇā, Mahānta Bharata Rāmānuja Dāsa. Appearance, tolerable. Prose. Incorrect.

**Beginning.** श्रीरामाय नमः । अथ गुटिका लिख्यते ।
सर्व्वविद्यासाधनं । अथ सकलजनवश्य होय ऐकचित्त मन्त्र जपिए वीसच आरवार देवदार चन्दन वरको जर पानीसो वाटिए विभूति सों संयुक्त के माथे तिलक करे तौ सर्व्वजन वश्य होय । पथरसगाको जर पुष्यनचत्रमो लिजे अश्वपद्रवनौ लोजे अरजोको जर लीजे ॥ इत्यादि ॥

**End.** ॐ नमः ह्रूं ह्रां क्लीं टः ठः फ ट् स्वाहा जहा को चले तहा को यह मन्त्र पढ़ी लेइ । श्रीनित्यनाथो जयति ।

**Colophon.** इति श्रीपार्व्वतीपुत्र-नित्यनाथ-विरचिते सिद्धिखण्डे मन्त्रसारे अक्षरसञ्जीवनीनाम सप्तम उपदेशः सम्पूर्णः । समाप्तम् । शुभमस्तु मङ्गलं दद्यात् । संवत् १८७६ ।

**विषयः ।** आकर्षणी-वशीकरणी-मोहकारिण्युच्चाटनसञ्चारिण्यादिमन्त्राः । तत्तन्मन्त्रसाधकद्रव्यादिनिरूपणञ्च ।

---

**No. 248.** सुभाषितम् . Substance, country-made paper, 7 × $4\frac{1}{2}$ inches. Folia, 16. Lines, 8 on a page. Extent, 150 çlokas. Character, Nāgara. Date, ? Place of deposit, District Medinīpura, Candrakoṇā, Mahānta Bharata Rāmānuja Dāsa. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीमते रामानुजाय नमः ।

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥
यतो यतो निवर्तन्ते विमुच्येत ततस्ततः ।
एकधर्मो ह्ययं क्षेमशोकमोहभयापहः ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञश्च तर्पणम् ।
दैवहोमं बलि × × × पूजनम् ॥ इत्यादि ॥

**End.** ताम्बूलं कटुतिक्तमिष्टमधुरं क्षारं कषायान्वितम्
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धि × नाशनम् ।
× × × × × कामाग्निसन्दीपनं
ताम्बूलस्य त्रयोदश गुणा स्वर्गेऽपि ते दुर्लभाः ॥ (?)
× × × × ×
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीम्
धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावत्
वन्दे महापुरुष ते चरणारविन्दम् ॥

**Colophon.** इति श्रीसुभाषितम् सम्पूर्णम् । श्रीमते रामानुजाय नमः । रामः ।

**विषयः ।** नानाविषयकश्लोकसङ्ग्रहः ।

---

**No. 249. सुभाषितसारसङ्ग्रहः.** Substance, country-made paper, 12 × 4 inches. Folia, 16. Lines, 15 on a page. Extent, 576 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ सुभाषितसारसंग्रहारम्भः । तत्रादौ मङ्गलम् ।
चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः ।
जयत्यकाले विघ्नजन् सन्ध्यामिव गजाननः ॥
वामाङ्गीकृतवामाङ्गः कुण्डलीकृतकुण्डलिः ।

आविरस्तु पुरोवास्तु भूतिभृत्यम्बराम्बरम् । इत्यादि ।

**End.** दशमद्वारमार्गेण लक्ष्यं प्राप्य ततः परम् ।
द्वात्रिंशत्तत्त्वसंयुक्तः परमात्मनि लीयते ।

**Colophon.** इति सुभाषितसारसंग्रहः समाप्तः ।

**विषयः ।** प्रसन्नोपक्रान्तश्लोकानां सारसंग्रहः ॥

---

**No. 250.** सूक्तप्रतीकम् . Substance, country-made paper, 11 × 4 inches. Folia, 56. Lines, 15 on a page. Extent, 1,640 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, fresh. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।
अग्निमीड़ इति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः ॥ अग्निर्देवता गायत्रीच्छन्दः ॥ इत्यादि ।

**End.** तृतीयायास्त्रिष्टुप् शिष्टानां तिसृणामनुष्टुप् ।

**Colophon.** इति अष्टमाष्टके अष्टमोध्यायः ॥ इति दशमं मण्डलम् ।

**विषयः ।** ऋग्वेदोक्त ऋचां प्रतीकादिनिरूपणम् ।

---

**No. 251.** सूर्य्यपञ्चाङ्गम् . Substance, country-made paper, 7 × 4 inches. Folia, 156. Lines, 5 on a page. Extent, 700 çlokas. Character, Nāgara. Date, ? Place of deposit, Mahārājā's Library, Hātuā. Appearance, new. Verse. Correct.

**Beginning.** ॐ श्रीगणेशाय नमः ।
ॐ श्रीशैलशिखरासीनं भैरवीपतिमीश्वरम् ।
भैरवं चन्द्रमुकुटं गणगन्धर्वसेवितम् ॥
पन्नगाभरणोपेतं जटामुकुटमण्डितम् ।
भस्माङ्गरागधवलं सूर्य्यं + + + + ॥
+ + + + +
गङ्गाधरं प्रसन्नास्यं चर्चितामलपङ्कजम् ।
नन्दिचक्रार्चितं शम्भुं दृष्ट्वा प्रोवाच भैरवी ॥

श्रीदेव्युवाच ।
देवदेव महादेव भक्तानामभयप्रद ।
त्वं शिवः परमेशानस्त्वं विष्णुस्त्वं प्रजापतिः ॥
+ + + +
यद् गोप्यं दशदिग्भ्यो पञ्चाङ्गं पूर्व्वसूचितम् ।
देवदेवस्य सूर्य्यस्य + + + + + ॥ इत्यादि ।

**End.** अदातव्यमभक्ताय दातव्यञ्च महामुनिम् ।
गुह्या तिगुह्यगोपनीयत्वं सूर्य्यपञ्चाङ्गमुत्तमम् ॥
सर्व्वदा सर्व्वथा गोप्यं गोपनीयं स्वयोनिवत् ॥

**Colophon.** इति श्री रुद्रयामले तन्त्रे देवीरहस्ये परमादीपिकायां श्रीभगवत्सूर्य्यपञ्चाङ्गं समाप्तम् ॥

**विषयः ।** रुद्रयामालतन्त्रीय-देवीरहस्यान्तर्गतम् श्रीसूर्य्यदेवस्य पटल-पूजापद्धति-सहस्र-नाम-कवच स्तवराजात्मकपञ्चाङ्गम् ।

---

**No. 252.** सूर्य्याथर्व्वशीर्षम्. Substance, country-made paper, 4 × 2 inches. Folia, 5. Lines, 7 on a page. Extent, 35 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ॥ ॐ ॥
सूर्य्याथर्व्वशीर्षं व्याख्यास्यामः ॥ ब्रह्मा ऋषिः । गायत्रीच्छन्दः । आदित्यो-देवता हंसाद्यग्निनारायणयुक्तं बीजम् ॥ इत्यादि ।

**End.** त्रिकालं जप्त्वा क्रतुशतफलं प्राप्नोति यश्च आदित्यो जपति । स महामृत्युं तरति स महामृत्युं तरति य एवं वेद इत्युपनिषत् ॥

**Colophon.** श्री सूर्य्याथर्व्वशीर्षं समाप्तम् ।

**विषयः ।** श्रीसूर्य्यनारायणस्तुतिः ॥

---

**No. 253.** सौरसूक्तम्. Substance, country-made paper, 5 × 3 inches. Folia, 11. Lines, 7 on a page. Extent, 88 çlokas. Character, Nāgara. Date, ? Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose. Correct.

**Beginning.** श्री गणेशाय नमः ॥

उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य कण्वः प्रस्कण्व ऋषिः सूर्य्यो देवता नवाद्या गायत्र्योऽन्त्याश्चतस्रोऽनुष्टुभः ॥ इत्यादि ।

**End.** सूर्य्यस्यैव सायुज्यं सरूपतां सलोकतामश्नुते । नमः शौनकाय । नमः शौनकाय । सौरः समाप्तः ।

**विषयः ।** भगवत्सूर्य्यनारायणस्तुतिविषयकं सूक्तम् ।

---

**No. 254.** स्तवामृतलहरी. By विश्वनाथचक्रवर्त्ती. Substance, country-made paper, 12 x 6 inches. Folia, 37. Lines, 12 on a page. Extent, 1,300 clokas. Character, Bengali. Date, ? Place of deposit, District Bardhamāna Seyādasol. Çrī Candrānanda Thākura. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।*

संसारदावानललीढलोक-
त्राणाय कारुण्यघनाघनत्वम् ।
प्राप्तस्य कल्याणगुणार्णवस्य
वन्दे गुरोः श्रीचरणारविन्दम् ॥
महाप्रभोः कीर्त्तन-नृत्य गीत-
वादित्रमाद्यन्मनसो रसेन ।
रोमाञ्च-कम्पाश्रु तरङ्ग-भाजो
वन्दे गुरोः श्रीचरणारविन्दम् । इत्यादि ।

**End.** नन्दसूनो कृष्ण गोविन्द दृश मयि दिश मयि ।
निजकृपया मां जीवय मन्दस्मितसुधया ॥
पीतवसन मम कलय मनो
नवनीतनिन्दिकमनीयतनो ।
व्रजवनगरावतंस विभो
वल्लभं मामुररीकुरु भोः ॥ * ॥

**Colophon.** समाप्तेयं स्तवामृतलहरी ।

**विषयः ।** गुरुदेवाष्टकादिः । गुरुचरणस्मरणाष्टकम् । नरोत्तमप्रभोरष्टकम् । लोकनाथ प्रभोरष्टकम् । शचीनन्दनविजयाष्टकम् । स्वरूपविज्ञापनम् । मदनगोपालदेवाष्टकम् ।

अनुरागवल्ली । राधिकाध्यानाम्रतम् । रूपचिन्तामणिनिरूपणम् । सङ्कल्पकल्पद्रुमकथनम् । सुरतकथाम्रतकथनम् । कृष्णस्तवादिश्चेति ।

---

**No. 255.** स्नेहमालिका. Substance, English paper, 16×4 inches. Folia, 30. Lines, 8 on a page. Extent, 750 çlokas. Character, Bengali. Date, ? Place of deposit, Ḍhākā Paṭuāṭuli, Bābu Yādavānanda Gupta. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

अथ ज्वरस्य स्नेहमाह ।

अगुर्व्वेला हरिद्रे द्वे मुर्व्वा मुस्तकरेणुकम् ।

कटुकं मधुकं रास्ना चन्दनं शतपुष्पकम् ॥ इत्यादि ।

**End.** अग्निश्च कुरुते दीप्तिं स्नीणां स्तन्यविशेषणम् । भड्गोतृकटार्यं घृतम् ॥

**Colophon.** इति स्नेहमालिकायां बालरोगाधिकारः ।

समाप्तेयमायुर्व्वेदसंग्रहीता स्नेहमालिकानाम्नी पुस्तिका ॥ * ॥

**विषयः ।** नानाविध घृततैलादिकरणप्रकारादिकथनम् ॥

---

**No. 256.** स्मृतिकल्पद्रुमः राधावल्लभ कविवागीशः. Substance, country-made paper, 14×3 inches. Folia, 56. Lines, 6 on a page. Extent, 1,000 çlokas. Character, Bengali. Date, Sk. 1712. Place of deposit, District Bardhamāna, Post Office Ukhaḍā grāma Dakṣiṇakhaṇḍa, Çrī Gauraguṇānanda Ṭhākura. Appearance, tolerable. Prose. Generally correct.

**Beginning.** ॐ श्रीरामः ।

स्मृतिकल्पद्रुमाख्यानं ग्रन्थं प्राकृतभाषया

कुरुते कविवागीशो राधावल्लभसंज्ञकः ॥

সর্ব্বত্র শুচি তৎকালজীবী পুরুষাদি কর্ম্মাধিকারী হয়। অতএব প্রথমে শুদ্ধি নির্ণয় করিতেছি।

**End.** অপর অসমান জাতির তর্পণ না করিবেক। কিন্তু ভীষ্মের তর্পণ করিবেক ॥ * ॥

**Colophon.** इति श्रीमुकुन्दमिश्रतनूद्भव-कविवागीश-श्रीराधावल्लभशर्म्मविरचिते स्मृतिकल्पे श्राद्धमञ्जरी समाप्ता ॥ * ॥

द्वादशाश्वीन्दुशकाब्दे मिते भानौ गते घ्नुषौ ।
श्रीमद्द्विजो उमाकान्तशर्म्मा प्राश्लिषच्छ्राद्धमञ्जरीं ॥

**विषयः ।** प्रथमा शुद्धिमञ्जरी । तत्र शुद्ध्यादिव्यवस्था । द्वितीया प्रायश्चित्तमञ्जरी । तत्र प्रायश्चित्तादिव्यवस्था । तृतीया तिथिमञ्जरी । तत्र तिथ्यादिव्यवस्था । चतुर्थी श्राद्धमञ्जरी । तत्र श्राद्धव्यवस्थादिश्चेति ।

---

**No. 257.** स्मृतिसंक्षेपः. By नरोत्तमदेवशर्म्मा. Substance, country-made paper, $12 \times 2\frac{1}{2}$ inches. Folia, 6. Lines, 8 on a page. Extent, 140 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Royāil grāma, Bābu Yogīndramohana Rāya. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः परदेवतायै ।
अज्ञानतिमिरध्वंसि संसारार्णवतारकम् ।
मुक्तिप्रदं पदं यस्य नत्वा संगृह्यते मया ॥
चार्णकेन सुबोधेन नरोत्तमद्विजेन वै ।
कथ्यते स्मृतिसंक्षेपो शृण्वन्तु द्विजसत्तमाः ॥ अथाशौचसंक्षेपः । इत्यादि ।

**End.** कुलटा षण्ढातिरिक्तदुष्कृतकर्म्मणोऽपि अयाचिताद्यन्नं पाक्यं ॥ * ॥

**Colophon.** इति स्मृतिसंक्षेपेऽशौचव्यवस्था समाप्ता ॥ * ॥

**विषयः ।** संक्षेपेणाशौचव्यवस्थादिकथनं ।

---

**No. 258.** स्मृतिसंक्षेपसारः. By रमाकान्तचक्रवर्त्ती. Substance, country-made paper, $17 \times 3$ inches. Folia, 15. Lines, 6 on a page. Extent, 375 çlokas. Character, Bengali. Date, ? Place of deposit, District Dhākā, Āḍāilhajār, Paṇḍita Candrakānta Vidyālaṃkāra. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमो गणेशाय ।
प्रणम्य काली चरणारविन्दम्
ज्ञात्वा च तत्त्वं स्मृतेर्विशेषम् ।
वक्ष्यामि पुंसां सुबोधहेतुम्
संक्षेपसारं खलु बालबोध्यम् ॥
अथोद्वाहस्मृतिसंक्षेपसारो निरूप्यते । अथोद्वाहलक्षणं यथा ।

भार्य्यात्वसम्पादकग्रहणं विवाहः । तद्ग्रहणञ्च उत्सर्गानन्तरं वरस्य ममेयमिति ज्ञानरूपम् । तस्य समवायविषयताभ्यां सम्बन्धाभ्यां वरकन्ययोः सत्त्वाञ्च वरकन्ययोर्विवाह इति प्रतीतिरुपपद्यते । तस्य स्वीकाररूपज्ञानविशेषस्य समवायविषयतयोर्भेदाद्वरकन्ययोर्विवाहकर्त्तृत्वकर्म्मत्वे । अतएव कन्यापुत्र-विवाहेष्विति संगच्छते । इत्यादि ॥

**End.** मातृबन्धुसन्निपातव्यवस्था । एकतो मातृ मातामही तत्पितृ पितामह-प्रपितामहाः । अन्यतोऽपुत्रा मातामहीभगिनी तदा तत्पुत्रयोग्यतामवलम्ब्य तन्मातामह-प्रमातामह वृद्धप्रमातामहानां प्रत्येकं सन्ततिः पञ्चमीपर्य्यन्ता बन्धुकन्यादिकाः पञ्च वाधस्तना विगोत्रान्तरिता नोद्वाह्याः ।

... ... ... ... ... ... ... ... ...

यदा तु पितामहीभ्रातापि नास्ति तदा तयोर्योग्यतामवलम्ब्य बन्धुपितामह-प्रपितामहानां प्रत्येकं सन्ततिः × × पर्य्यन्ता बन्धुभगिन्यादयः पञ्च या विगोत्रान्तरिता नोद्वाह्याः ॥

**Colophon.** इति मधुसूदनभट्टाचार्य्यात्मज श्रीरमाकान्तचक्रवर्त्ति-निरूपिते स्मृतिसंक्षेप-सारे सम्बन्धः पञ्चविध इत्यादि बन्धुसन्निपातान्तविवेचनं समाप्तम् ॥

**विषयः ।** उद्वाहलक्षणम् । तत्र कन्यादानाधिकारिक्रमकथनम् । कन्याविवाहकालनिरूपणम् । गोत्रनिरूपणम् । कन्योत्सर्गवाक्ये प्रवराद्युल्लेखस्य कर्त्तव्यत्वकथनम् । यजुर्वेदिनां सामगेय-कन्यादानोत्सर्गपूर्व्वकमग्निस्थापनादि-विवेचनम् । सपिण्ड-समानोदक-सगोत्र समानप्रवर-बान्धवभेदात् पञ्चविधसम्बन्धनिरूपणञ्च ।

---

**No. 259. स्वत्वविचारः**. Substance, country-made paper, 18 × $3\frac{1}{2}$ inches. Folia, 13. Lines, 10 on a page. Extent, 300 çlokas. Character, Bengali. Date, ? Place of deposit, District Medinīpura, Post Office Khaḍāra-grāma Kurāṇa, Paṇḍita Ambikācaraṇa Vidyāsāgara. Appearance, new. Prose. Correct.

**Beginning.** श्रीहरिः पातु ।

स्वत्वं तावत् स्वत्वमुत्पन्नं विनष्टं तवस्वं ममस्वं देवस्वं ब्रह्मस्वमित्यादि-प्रतीतिसिद्धं पदार्थान्तरम् । तच्च वृत्तिनियामकविशेषेण सुवर्णादिनिष्ठं स्वर्ण-स्वत्वमिति प्रत्ययात् निरूपकत्वाख्यविशेषणताविशेषेण च स्वामिनिष्ठम् । अत्रास्य पुत्रस्य स्वत्वमिति प्रत्ययात् । नचैवमस्मिन् एतद्द्रव्यस्वामित्वमेतद्द्रव्यपति-त्वमिति कथं स्यात् निरूपकतासम्बन्धस्य वृत्त्यनियामकत्वात् । निरूपकता

सम्बन्धस्यापि प्रकृतिहत्तिनियामकताभ्युपगमे अस्मिन् पुरुषे एतद्द्रव्यस्वामित्वमिति प्रतीतेर्दुर्व्वारत्वादिति वाच्यं। इत्यादि ॥

**End.** केचित्तु जलप्रक्षेपप्रतिपत्तिरूपपिण्डपितृयज्ञवत् सर्व्वमेव श्राद्धं होमरूपमेव अग्नौ करणहोमस्याग्नौत्सर्गादेश्च तदङ्गत्वादित्याहुः। तदसत् अग्नौत्सर्गस्यैव श्राद्धत्वस्य सकलतान्त्रिकसिद्धस्यासति बाधके त्यागानौचित्यादिति दिक् ॥

**Colophon.** इति त्यागस्वरूपनिरूपणम्। स्वत्वविचारः समाप्तः।

हेरम्ब-सूर-कमलापति-शङ्करोमा-वाणी-रमाभयवरप्रदकालिकानाम्।
पादाम्बुजानि सुरदानवसेवितानि कुर्व्वन्तु शं प्रणमतो मम दैन्यभाजः ॥
यास्यति जलधरसमय स्तवापि च समृद्धिर्लघीयसी भविता।
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥
मुरहर रन्धनसमये मा रण मुरलीमहो मधुराम्।
नीरसमेध्ये रसतनुतां कृशतनुतां कृशानुरेति ॥

**विषयः।** स्वत्वस्य विचारः। पुत्रस्वत्वकथनम्। दम्पत्योः पारस्परिकस्वत्वकथनम्। विषयाधीनाञ्च स्वत्वकथनं त्यागस्वरूपकीर्त्तनञ्च।

---

**No. 260.** स्वधर्म्मामृतसिन्धुः By श्रीसुकमुधीः. Substance, country-made paper. 10 × 5 inches. Folia, 245. Lines, 10 on a page. Extent, 4,500 çlokas. Character, Nāgara. Date, Sm 1934. Place of deposit, Hātuā, Koyeladeva Maṭha. Appearance, new. Prose and verse. Correct.

**Beginning.** श्रीमन्निम्बार्काय नमः।

श्रीनिम्बार्कं नमस्कृत्य सम्प्रदायानुसारतः।
स्वधर्म्मामृतसिन्धुर्वै क्रियते शास्त्रमानतः ॥

शब्दानुमानोपमानप्रत्यक्षैतिह्यार्थापत्त्याख्यानि षड् प्रमाणानि। तत्रार्थापत्त्युपमानयोरनुमाने ऐतिह्यवाक्यस्य चाप्तवचनत्वाच्छब्देऽन्तर्भावः। प्रत्यक्षानुमानयोः क्वचिद्व्यभिचारदर्शनेन स्वतन्त्रप्रमाणत्वाभावाच्छब्दानुसारित्वांशेन प्रमाणत्वेऽपि मुख्यं प्रमाणं शब्दः। अतएव भाष्यकारेण वेदान्तकौस्तुभे वैदैकप्रमाणकं ब्रह्मेति सुदृढं स्थापितम्। ब्रह्मप्राप्त्युपायभूतस्वधर्म्मनिश्चयोऽपि वेदात् तदर्थप्रतिपादकाच्च शास्त्रात् कर्त्तव्यः।

तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसीति भगवद्वचनात् ॥

मूलस्तम्भमया वेदा पञ्चरात्रञ्च यत्परं ।
अन्यच्च यत्परं प्राज्ञं शास्त्रं नान्यद्दृढं पुनरितिभारद्वाजसंहितोक्तेः ॥—
ऋग्यजुःसामाथर्व्वाणञ्च भारतं पञ्चरात्रकं ।
मूलरामायणञ्चैव शास्त्रमित्यभिधीयते ॥ इत्यादि ।
इति प्रमाणनिर्णयः । इति स्वधर्म्मामृतसिन्धौ प्रथमस्तरङ्गः ॥

**End.** एवं धर्म्मैर्मनुष्याणाम् ... चात्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ इति
अर्च्चितो वन्दितो ध्यातः कीर्त्तितो वा श्रुतोऽपि वा ।
विशिष्टैरविशिष्टैश्च सर्व्वैः प्राप्यो मया श्रुतः ॥
मामपि भक्तानां तेषां रहस्ये संनियोजय ।
गतिर्भव दयासिन्धो दासोऽस्मि तव केशव ॥
श्रीराधां रुक्मिणीं सत्यां गुरुं गुरुपरम्पराम् ।
मद्भक्तिदास्यलाभाय भूयो भूयो नमाम्यहम् ॥

**Colophon.** श्रीमत्परमवैष्णवाचार्य्य श्रीमद्भगवत्सनत्कुमारसन्ततिप्रवर्त्तक–श्रीमद्भगवन्निम्बार्क-
चरणचिन्तक श्रीशुकसुधीसंग्रहीते स्वधर्म्मामृतसिन्धौ पञ्चविंशस्तरङ्गः ॥
तत्र भाद्रशुक्ला २ रविवासरे संवत् १९३४ शुभं भवतु श्रीहरिगुरुचरण-
कमलेभ्यो नमः ॥

**विषयः ।** पञ्चविंशतरङ्गात्मकं प्रधानतः श्रीकृष्णस्यैव पूजाप्रवर्त्तकं वैष्णवं शास्त्रमिदम् तत्र प्रथमे शब्दानुमानोपमानप्रत्यक्षैतिह्यार्थापत्त्याख्यषट्प्रमाणेषु शब्दात्मकं शास्त्रमेव मुख्यं प्रमाणमिति कथनम् । द्वितीये वेदनिदिध्यासनोपासनलक्षणाद्भगवज्ज्ञानात् सर्व्वदुःखनिवृत्तिर्भवतीत्यस्य प्रमाणकथनं गुरुभक्तिनिर्णयश्च । तृतीये दीक्षाया प्राशस्त्यकीर्त्तनं । शिक्षायाः परीक्षायाश्च कालकथनं । अष्टाक्षरादिमन्त्रकथनं । ललाटादिद्वादशस्थानेषु शङ्खचक्राद्यवयवकतिलकधारणविधिश्च । चतुर्थे षट्साधननिरूपणं । वैराग्यस्य लक्षणकथनं प्रकारकथनञ्च । उपाध्यायशिष्ययोरुपाख्यानच्छलेन भक्तिमाहात्म्यकथनञ्च । पञ्चमे भगवद्भजने अधिकारिनिर्णयः । षष्ठे सप्तमे च बाह्याभ्यन्तरशुचित्वप्रकारकथनम् । अष्टमे नवमे मुद्रान्यासादिप्रकारनिरूपणम् । पीठादिपूजाविधानञ्च । दशमे वैष्णवस्य कर्त्तव्यनिरूपणम् । एकादशे वैष्णवस्य लक्षणकथनम् । द्वादशे सदाचारविशेषकथनम् । त्रयोदशे चतुर्दशे च एकादश्यादिव्रतविधिः । एकादशीमाहात्म्यकीर्त्तनं । एकादश्यादिव्रतानां कालनिर्णयश्च । पञ्चदशे षोडशे च मासकृत्यनिरूपणं अधिकारिनिरूपणञ्च । सप्तदशात् पञ्चविंशपर्य्यन्ते वैशाखादि-चैत्रपर्य्यन्त-द्वादशमासेषु श्रीरामनवमी-जन्माष्टमीप्रभृतिव्रतनिरूपणम् । व्रतानां कालनिरूपणञ्च । तत्र दामोदराष्टकम्

अमावस्याहात्म्यम् । गोपूजामन्त्रः । यमद्वितीयामाहात्म्यम् । श्रीकृष्णप्रबोधनादिपूजनविधिः । श्री-राधिकोपाख्यानादिकीर्त्तनञ्चेति ।

---

**No. 261.** स्वर्गवादः. Substance, country-made paper, 17 x 4 inches. Folia, 2. Lines, 8 on a page. Extent, 50 çlokas. Character, Bengali. Date ? Place of deposit, Gāduriā, District Barisāla, Paṇḍita Durgācaraṇa Nyāyaratna. Appearance tolerable. Prose. Generally correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।
अथ दुःखासंभिन्नादिसुखत्वं स्वर्गत्वं इत्यादि ।

**End.** प्रेतत्वविमुक्तिं प्रति चेतुत्वमित्येक एव कार्य्यकारणभावो वाच्य इति नव्याः ॥
इति ॥

**विषयः।** अत्र त्रयो वादार्थाः सन्ति । स्वर्गवादः प्रतिष्ठावादः सपिण्डीकरणवादश्चेति । एषु च स्वर्गनिरूपणं । प्रतिष्ठाविध्यादिकथनं । सपिण्डीकरणविध्यादिकथनञ्च ।

---

**No. 262.** हंसदूतटीका. By श्रीरामशङ्करवन्द्यः. Substance, country-made paper, $12\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 28. Lines, 9 on a page. Extent, 1,200 çlokas. Character, Bengali. Date, ? Place of deposit, District Hugli, Khānākula, Kṛṣṇanagara, Paṇḍita Brahma Nārāyaṇa Vidyālaṃkāra. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ श्रीगुरुभ्यो नमः ।
श्रीराम-गुरु-नानाङ्घ्रिनतः श्रीरामशङ्करः ।
तनोति हंसदूतस्य टीकां श्रीरामसम्मुदे ॥
तत्र शीरपरम्परापरिप्राप्तं मङ्गलमाचरति । दुकूलमित्यादि । दलितहरि-
ताश्मद्युतिहरं दलितं मर्द्दितं च तत् हरिताश्मं चेति दलितहरिताश्मं तस्य द्युतिं
शोभां हरतीति वाक्ये कृञोऽचने इत्यक् गुणवत् दुकूलं पट्टवस्त्रं बिभ्राणो
धृतः ।.भूभ्यको धृतिपुष्टोः कर्त्तर्य्य-क्रियाफले शानः । इत्यादि ॥

**End.** मुरारातिक्रीडानिविड़घटनाकण्ठशचितः मुरारातेः श्रीकृष्णस्य यत् क्रीड़ा-
निबिड़ं क्रीड़ातिशयः तस्य घटनारूपेण प्रकाशकरूपेण सचितः पूजितः

अयं प्रबन्धः अर्थात् मत्कृतः प्रबन्धः अखिलजगतां वन्द्यः । हितकारिणस्तस्य श्रीकृष्णस्य प्रभोः स्वामिनः अन्तःसान्द्रां अन्तःकरणे निविडां प्रमोदलहरीं सन्तोषलहरीं स्रवयतु वर्षयतु । १४२ ।

**Colophon.** श्रीरामगुरुतातांघ्रिस्मर्त्ता श्रीरामशङ्करः ।
वन्द्यो व्याख्यानवान् हंसदूताख्यं रामसम्मुदे ॥
गोस्वामि श्रीरूपनामा तत्कृतिः प्रेमभक्तिदा ।
सा कृष्णनगरस्थस्य गिरा मया सुबोधिका ॥

**विषयः ।** श्रीरूपगोस्वामिकृतस्य हंसदूताख्यभक्तिरसात्मककाव्यस्य व्याख्यानम् ।

---

**No. 263.** हनुमत्सहस्रनामस्तोत्रम् . ( ब्रह्माण्डपुराणोत्तरखण्डीयम् ) Substance, country-made paper, $3\frac{1}{2} \times 4$ inches. Folia, 18. Lines, 7 on a page. Extent, 200 çlokas. Character, Nāgara. Date, Sm. 1818. Place of deposit, District Medinīpura, Candrakoṇā, Mahānta Bharata Rāmānuja Dāsa. Appearance, old. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः । श्रीरामचन्द्राय नमः ।
ऋषय ऊचुः ।
ऋष्यमूकं गिरिं प्राप्य सीताविरहकातरः ।
भगवन् किं + + रामस्तत्सर्व्वं वृहि विस्तरम् ॥
श्रीवाल्मीकिरुवाच ।
मायामनुष्यदेहोऽयं ददर्शापि कपीश्वरं ।
हनूमन्तं जगत्स्वामी बालार्कसमतेजसं ॥
सत्वरञ्च समागम्य साष्टाङ्गं प्रणिपत्य च ।
कृताञ्जलिपुटो भूत्वा हनूमान् राममब्रवीत् ॥
हनूमानुवाच ।
धन्योऽस्मि कृतकृत्योऽस्मि + + + + ।
योगिनामप्यगम्यश्च संसारभयनाशनम् ॥ इत्यादि

**End.** ब्राह्मे मुहूर्त्ते चोत्थाय प्रत्यहं यः पठेन्नरः ।
ऐहिकामुष्मिकं सोऽपि जायते नात्रसंशयः ॥
स्वाराज्य + + सम्पत्तिदायकं जपतां सदा ॥

य इदं पठते नित्यं पाठयेद्वा समाहितः ।
सर्व्वान् कामानवाप्नोति वायुपुत्रप्रसादतः ।

**Colophon.** इति श्रीब्रह्माण्डपुराणे उत्तरखण्डे श्रीरामचन्द्रप्रोक्तं हनूमत्सहस्रनामस्तोत्रं सम्पूर्णम् ॥
मात्राहीनं पदभ्रष्टं यदक्षरसमन्वितम् ।
तत्सर्व्वं क्षम्यतां देव प्रसीद परमेश्वर ॥
संवत् १८९८ शकाब्द १६८३ ।

**विषयः ।** देवस्य हनूमतः सहस्रनामकीर्त्तनम् ।

---

**No. 264** हनुमद्दुर्गः. Substance, country-made paper, 80×3 inches. Folia, 5. Lines, 9 on a page. Extent, 60 çlokas. Character, Nāgara. Date, Sk. 1697. Place of deposit, Benares City, Govinda Bhaṭṭa Solāpurkār. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः । हनुमद्दुर्गो लिख्यते ॥
अस्य श्री अनन्तघोरप्रलयज्वालाग्निरौद्रस्य वीरहनूमतो असाध्यसाधन-अघोरास्त्रमूलमन्त्रस्य ॥ इत्यादि ।

**End.** ह्रिं ह्रिं सर्व्वमन्त्रार्थसिद्धिं कुरु कुरु स्वाहा ॥

**Colophon.** इत्यथर्व्ववेदोक्तं हनुमद्दुर्गं समाप्तम् ॥ गोदातटविलसत्पुण्यस्तम्भपुरे तुल्लापुरकारोपनामक-विनायकस्यात्मज-पण्ढरङ्गेण लिखितम् ॥ १६९७ शाके ॥

**विषयः ।** वीरत्वसाधनं हनुमतो मन्त्रादिकथनम् ।

---

**No. 265.** हरिभक्तिसुधोदयः. Substance, country-made paper, 12×5 inches. Folia, 95. Lines, 7 on a page. Extent, 2,000 çlokas. Character, Bengali. Date, ? Place of deposit, District Ḍhākā, Post Office Royāil, Raghunāthapura grāma, Babu Gouramohaṇa Rāya. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीकृष्णाय नमः ।
एकं यज्जनयत्यनेकतनुभृत् शस्यान्यजस्रं मिथो ।
भिन्नाकारगुणानि केश्चिदपि वा नोप्तं न सिक्तं जनैः ॥ इत्यादि

**End.** य इमं शृणुयाद्भक्त्या हरिभक्तिसुधोदयं ।
कथयेत् सर्व्वपापौघान्मुक्तो मोक्षं स गच्छति ॥

**Colophon.** इति श्रीनारदीयपुराणे हरिभक्तिसुधोदये विंशतितमोऽध्यायः ॥ समाप्त-श्चायं हरिभक्तिसुधोदयः ॥

**विषयः ।** हरिभक्तिमाहात्म्यम् हरिकथाश्रवणादिफलकथनञ्च ।

---

**No. 266. हेमाद्रिटीका.** Substance, country-made paper, 10×3 inches. Folia, 253. Lines, 10 on a page. Extent, 4,554 çlokas. Character, Nāgara. Date, Sk. 1704. Place of deposit, Benares City, Govinda Bhatta Solāpurkār. Appearance, old. Prose. Correct.

**Beginning.** श्रीमद्भगवान्ये नमः ।

पृष्ठे कूर्मतया चतुर्भुजतया दोर्मण्डले मन्दरं
बद्धा क्षीरसमुद्रमोषधिभृतं निर्मथ्य नित्यादितैः ।
भामीनैरमृतैर्भिषक्तममतया योषितया पायितैः
देवानामजरामरत्वमकरोत्तस्मै नमो विष्णवे ॥
हेमाद्रिणा चतुर्वर्गचिन्तामणिविधायिना ॥ इत्यादि

**End.** खेदेति । भ्रमतरमत्यर्थं । तुशब्दान्न केवलं भ्रमतरवचं प्रलेपादि किन्तु पूर्व्वोक्तमपि यथा योजयेत् ॥ स्ववस्थानमुपसंहरति समाप्य इति ॥

**Colophon.** इति हेमाद्रिटीकायामायुर्व्वेदरसायने आराग्निप्रकरणं समाप्तम् । स निरूपितम् । शकाब्दाः १७०४ ॥

**विषयः ।** हेमाद्रिकृतस्य आयुर्व्वेदरसायनाख्य वैद्यग्रन्थस्य व्याख्यानं ॥

---

# INDEX OF AUTHORS.